मेषो वृषोऽथ सिंहस्तुरगान्त्यार्धं मृगस्य पूर्वार्धम् ।

योनिश्चतुष्पदानां [१] मध्यो धनुषो भवेन्मर्त्यः ॥३८॥

कन्याघटमिथुनतुलाह्वयार्धमाहुर्मनुष्ययोनिरिति [२] ।

कर्कटझषकुम्भधरा मृगापरार्धञ्च [३] जलयोनिः ॥३९॥

---

स्थापिते । आग्नेयादिषु विदिक्षु मिथुनादयो यमळाः स्थापिताः—स्थिरचक्रसव्यक्रमस्थापिताः । प्रष्टारूढराशिमुदयं कृत्वा मूर्त्या [दयो ? दिषु] यद्यत्पृच्छति तद्विमृश्य वदेत् ।

तत्र[1] प्रश्नकाले यस्मिन् राशौ गौळीकाकमनुष्यपशुभेरीनादः सम्भवति [स ? तं][2] राशिमप्युदयं [कल्प्य ? कृत्वा] वदेत् । ततश्चरचक्रगतिः । उदयराशिं प्राक्स्थितं ज्ञात्वा तस्माद्दक्षिणावर्ता राशयः । उदयाच्चतुर्थराशिः पाताळगतः । सप्तमोऽस्तमितः । दशमो मध्यगतः[3] । शेषास्तदन्तराळस्थाः । स चरक्रो[4] भवति । उदयारूढयोरुपरि[5] छत्रवत् स्थितः छत्रराशिः भूयश्चिन्त्यः । तेषां विषयविभागं पुनर्वक्ष्यामि आगन्तुफलमूह्यमित्यस्मिन्[6] श्लोकान्ते ॥३७॥

अथ राशियोनिमाह—मेषवृषसिंहाश्चतुष्पदानां योनयः । तुरगान्त्यार्धं मृगस्य पूर्वार्धं [च] चतुष्पाद्योनिः[7] । मध्यो धनुषो भवेन्मर्त्यः, धनुषो मध्यद्रेक्काणः केवलमनुष्यः[8] ॥३८॥

कुम्भो[9] जलधरमनुष्यः ॥३९॥

---

१ 'नां मध्यं' ग, य; 'नां मध्ये' ङ, ड, ण, त, प, म. २ 'याद्यमा' ञ. ३ 'र्धन्तु ज' क.

---

1 'अत्र' च. 2 'सा रा' ख, ग, छ, झ. 3 'ध्यः शे' ख, ग, ज, झ. 4 'चक्रे' क, ङ, य. 5 'रिग्रहवत्स्थि' क, च. 6 'मिति तस्मिन्' झ. 7 'ष्पाद्योनयः' क, घ, ङ, 'ष्पदा योनयः' च. 8 'लं म' झ. 9 'लचरम' क, ङ, च, छ.

* वृश्चिककुळीरमीनास्सरीसृपाणां वदन्ति योनिरिति ।

कन्यातुलेश[1]तुरगा राशिषु[†] पौरा विनिर्दिष्टाः ॥४०॥

$ मेषवृषमिथुनकुम्भा ग्राम्या इति सूरिभिः समाख्याताः ।

मृगपतिमकराद्यर्धावारण्यौ सर्वभावेषु ॥४१॥

गुरुसौम्यौ ग्रामचरौ रविकुजसौरोरगा वसन्ति वने ।

जलनिलयौ शशिशुक्रौ[£] भोजनन[2]ष्टादिषु ग्राह्याः ॥४२॥

---

वृश्चिककुळीरमीनाः सरीसृपाणां योनिः । जलचरसरीसृपौ कर्कटमीनौ । राशिषु कन्यातुलाह्वया नगरवासिनः ॥४०॥

मेषवृषमिथुनकुम्भा[1] राशयो ग्रामवासिनः । सिंहो मकराद्यार्धं चारण्यौ । ए[ते ? तानि] स्था [नाः ? नानि] सर्वभावेषु चि [न्त्याः ? न्त्यानि] पूर्वोक्तचतुष्पदो नगरग्रामवनवासिन इत्यर्थः[‡] ॥४१॥

गुरुबुधौ ग्रामवासिनौ । तत्र गुरुर्नगरे ग्रामे वा ब्राह्मणगृहवासी । बुधो राष्ट्रे

---

१ 'लेच तु' ख. २ 'ननष्टाद्ययो ग्रा' क, छ, झ, ढ, ण, ध, ब, य; नमुष्टयदयो ग्रा ष, च, न, फ; 'नविनष्टादयो ग्रा' ट.

---

1 'षकुम्भमिथुना ग्रा' ख, ग, ज, झ.

---

* मयपाठयोर्वृश्चिकेत्यादिश्लोकार्धं नास्ति । † 'राशिष्वि'त्यरभ्य 'सर्वभावेषु' (श्लो० ४१) इत्यन्तो भागो ञ पाठे नास्ति । $ पद्यमिदं गयपाठयोर्नास्ति; दधप पाठेषु पद्यमिदं ४३ तमपद्यानन्तरं विद्यते । £ 'शुक्रौ' इत्येतदनन्तरं 'सुहृदो गुरु' (अ० २. श्लो० २.) इत्येतत्पर्यन्तं तपाठे एकताळीपत्रभ्रंशान्नास्ति. ‡ इतः परं गपाठे द्वितीयाध्याये 'गुरुरर्कं' (२—२) इत्यादिश्लोकव्याख्यापर्यन्तं नास्ति । ताळीपत्रमेकं नष्टम् ।

सूर्यात्मजेन्दुपुत्रौ पक्षिसमानौ सरीसृपश्चन्द्रः ।
भृगुदेवगुरू द्विपदौ चतुष्पदौ भूमिपुत्रार्कौ ॥४३॥

विहगौ मृगमकरझषौ होराशास्त्रे परै[१]र्विनिर्दिष्टौ ।
आरण्यमिति च मेषं वदन्ति होराविदः केचित् ॥४४॥

इति कृष्णीयशास्त्रे[३] प्रथमोऽध्यायः ।

---

जनपदे वा वसति । सूर्योऽद्रितलवासी[1] । कुजोऽद्रिकूटवासी[2] । शनिर्गहनकान्तारवासी प्रेतवनवासी च । राहुर्वल्मीकश्वभ्रपल्वलरन्ध्रकुञ्जेषु वसति । शुक्रो जलचरमनुष्यः । गाधं जलं शुक्रस्य । चन्द्रोऽगाधजलवासी । सरीसृपश्चन्द्रो ग्रामाद्वनं गच्छति, शुक्रो वनाद् ग्रामं गच्छति । बलयुतेन भोजनं वनजं वा ग्रामजं वा ज्ञातव्यम् । पात्रञ्च नष्टद्रव्यञ्च मुष्टिञ्च ग्रामजं वा वनजं वा विमृश्य वदेत् । तत्र यदि ग्राम्यराशौ पौरग्रहस्तिष्ठति चेद् ग्रामजातो ग्रामवासीति वदेत् । पुरुषेष्वेवं सर्वम् । ततः पौरग्रह आरण्यराशौ पौरजातमारण्यवासं वदेत्[3] । एवमेव व्यत्यासं वदेत् ॥४२॥

शनिबुधौ पक्षिग्रहौ । चन्द्रस्सङ्कुलपादः शुक्रगुरू मनुष्यौ । कुजार्कौ चतुष्पदौ । बुधो ग्रामविहगः । चन्द्रो जलराशौ जलसरीसृपः स्थलराशौ स्थलसरीसृपः । शुक्रो जलचरः । गुरुर्ग्रामचरः । कुजो मांसभक्षणः । रविस्तृणभक्षणः ॥४३॥

राशिषु मकरमीनौ विहगौ । केचिदाचार्या मेषमारण्यमिति वदन्ति ॥४४॥

[इति कृष्णीयव्याख्यायां चतुरसुन्दर्यां प्रथमोऽध्यायः ।]

---

१ 'परं वि' ज. ३ 'ये प्रथ' झ.

---

1 'वासकः' क, घ, ङ, च, झ. 2 'जो वनवासो' क, घ, ङ, च. 3 'योजयेत्' क, छ, झ.

## द्वितीयोऽध्यायः

* पुरुषा रविगुरुभौमा नपुंसकाख्यौ बुधार्कपुत्रौ च।
नार्यौ भृगुचन्द्रमसौ ग्रहाः[१] स्वभावात्त्रिधा प्रोक्ताः ॥१॥

गुरुरर्कसुहृदनर्का बुधस्य शुक्रस्य सूर्यशशिवर्ज्याः[२] ।
[३]कुजरहिता देवगुरोश्शेषा रिपवो ग्रहा ज्ञेयाः ॥२॥

‡सुहृदौ गुरुबुधशुक्रा यमस्य सोमस्य देवगुरुसौम्यौ ।
भौमस्य शशिजभृगुजौ शेषा रिपवो विनिर्दिष्टाः ॥३॥

जीवो रवेस्तु मित्रं शशिनो जीवस्तथैव सोमसुतः ।
शुक्रबुधौ[४] भौमस्य तु सौम्यस्य[५] रविं[६] विना सुहृदः ॥४॥

---

अथ ग्रहाणां पुंलिङ्गादिविभागमाह—एते ग्रहाः[1] स्त्रीपुरुषनपुंसकाः । बुधः स्त्रीनपुंसकत्वात् स्त्रीपुंवर्गमिश्रांशस्थितौ मिश्रग्रहदृष्टौ च स्त्रीनपुंसकः । केवलं स्त्रीवर्गावस्थितौ स्त्रीग्रहमात्रदृष्टौ च स्त्रियमेव वदन्ति । पुंवर्गावस्थितौ तु बलयोगमवेक्ष्य पुमांसं वदेत् । शनिस्तु पुन्नपुंसकत्वाद् उक्तप्रकारेण पुंस्त्वसूचको द्रष्टव्यः ॥१॥

---

१ 'ग्रहस्व' ख, ग, ङ, छ, ज, झ, ञ, ट, थ, द, ध, प, ब, म, य. २ 'शनिव' ञ. ३ 'शशिकुजरहिताश्शेषा रिपवो गुरोर्ग्रहा ज्ञेयाः' ट. ४ 'कसौम्यौ' ख, ङ, ज, झ, ड, त, ध, ब, म, य. ५ 'सोम' ख, प. ६ 'रवेर्विना' क, घ, च, न, फ.

---

1 'एतैर्ग्रहैः स्त्रं पुरुषनपुंसकाः ज्ञायन्ते । बु' ख, घ, ज, झ'

---

* इदं पद्यं ख पाठे प्रथमाध्यायान्ते निवेशितम् । घ न फ पाठेषु नास्ति पद्यमिदम् ।

‡ पद्यमिदं घ, च, द, ध, न, प, फ पाठेषु नास्ति ।

१
जीवस्य भौमवर्ज्याश्शुक्रस्य शशाङ्कदिवसकरवर्ज्याः ।
२
रविचन्द्रभौमवर्ज्यास्सुहृदस्सौरेस्समाख्याताः ॥५॥

३ ४ ५ ६
रविशशिवर्ज्या राहोस्सुहृदः केतोस्तु चन्द्रशुक्रौ च ।
७ ८ ९
ये नोक्तास्ते रिपवो होराचार्या वदन्त्येवम् ॥६॥*

---

अथ सूर्यादीनां मित्रशत्रुभावमाह— उक्तैः पञ्चभिः श्लोकैः सूर्यादीनां शत्रुमित्र-

---

१ 'इन्द्रगुरोः कुजवर्ज्याश्शशधरर्कविवर्जिताश्च शुक्रस्य' क, ख, ग, घ, च, ञ, द, धः न, प, फ, ब, य; 'मित्रं गुरोः कुजोनाश्शशधरर्कविवर्जिताश्च शुक्रस्य' ट; 'इन्द्रगुरोः कुजवर्ज्याः शुक्रस्य शशाङ्कदिवसकरवर्ज्याः' ड. २ 'कुजरविशशधरवर्ज्य शेषा मन्दस्य मित्राणि' ख; 'कुजशशिरविभिर्हीनाश्शेषा मन्दस्य मित्राणि' ग, ङ, थ, प; 'गुरुबुधभृगुसुतहीनाः शेषा मन्दस्य मित्राणि' ञ, ट, य. ३ 'शशिरहिता रा' ख, ४ 'राहोः केतोस्तु चन्द्रभृगुपुत्रौ' ञ; ५ 'न्द्रभृगुपुत्रौ' ग, द, ध, प. ६ 'तु' ट. ७ येऽप्रोक्तास्ते य. ८ 'दन्त्यन्ये' ख ब, य. ९ 'वम् । रविचन्द्रभौमवर्ज्यास्सुहृदस्सौरेस्समाख्याताः । मूलत्रि' (श्लो० ७) घ, च.

---

* अर्कस्य गुरुर्बन्धुः सर्पज्ञौ शत्रुतां तथा प्राप्तौ ।
इन्दोरिन्द्राचार्यस्वसुतौ बन्धू मह सुतश्शत्रुः ॥
भौमस्य भार्गवज्ञौ सुहृदौ शत्रुः शतक्रतोर्मन्त्री ।
प्रत्यर्थित्वं प्राप्तः सविता सोमात्मजस्य नियमेन ॥
मित्रो गुरोस्तु मित्रं शत्रुर्विश्वम्भरापुत्रः ।
शुक्रस्य सोमसूर्यौ शत्रू चान्येऽप्युदासीनाः ।
बुधगुरुशुक्रास्सुहृदो मन्दस्यान्ये तु रिपवः स्युः ।
राहोश्चन्द्रादित्यौ शत्रू शेषास्तथैव मित्राणि ॥
उशनश्शीतमयूखौ केतोस्सुहृदौ परे स्मृता रिपवः ।
औदासीन्यं ज्ञेयं शेषाणां तत्र तत्रापि ॥ मूलत्रि (श्लो०—७) ख, झ.
एषु पद्येषु अनयोः पाठयोः क्वचित् क्वचिद् ईषद्भेदोऽप्यस्ति ।

* मूलत्रिकोणसंज्ञा धनुरजघटवृषभसिंहषष्ठतुलाः ।
गुरुभौमसौरशशिनां दिनकरशशिपुत्रशुक्राणाम् ॥७॥

‡ मूलत्रिकोणभवनाच्चतुर्थपञ्चमधनव्ययाष्टमगाः ।
स्वोच्चे धर्मे च गता ग्रहास्तु तात्कालिकास्सुहृदः ॥८॥

---

भावग्रहा विज्ञायन्ते[1] । जीवः सूर्यस्य बन्धुः[2], अन्ये ग्रहा रिपवः । शशिनो मित्रे जीव-बुधौ, अन्ये रिपवः । कुजस्य शुक्रसौम्यौ मित्रे, शेषा रिपवः । बुधस्य रविं विना सुहृदः । जीवस्य भौमवर्ज्या[3] ग्रहास्सुहृदः । शुक्रस्य शशाङ्कदिवसकरौ शत्रू, शेषा-स्सुहृदः[4] । मन्दस्य रविभौमचन्द्रवर्ज्याः सुहृदः । रविशशिनौ राहोः शत्रू, शेषास्सुहृदः । केतोश्चन्द्रशुक्रौ मित्रे, शेषा रिपवः । एवं होराचार्या वदन्ति । ग्रन्थगौरवात् प्रत्ययार्थं पुनर्वृत्तिवचनं प्रश्नादौ वक्ष्यामि — आदित्यस्य गुरुर्बन्धुः, राहु-बुधौ शत्रू, शेषा उदासीनाः । चन्द्रस्य जीवबुधौ बन्धू, कुजः शत्रुः, शेषा उदासीनाः । कुजस्य शुक्रबुधौ बन्धू, गुरुः शत्रुः, शेषा उदासीनाः । बुधस्यादित्यः शत्रुः, शेषास्सर्वे उदासीनाः । जीवस्यादित्यो बन्धुः, कुजः शत्रुः; शेषा उदासीनाः । शुक्रस्य रवि-चन्द्रौ शत्रू, शेषा उदासीनाः । शनेर्गुरुबुधशुक्रा [रिपवः ? मित्राणि] शेषा [मित्राणि ? रिपवः ।] राहोश्चन्द्रादित्यौ शत्रू, शेषा मित्राणि । केतोश्चन्द्रशुक्रौ बन्धू, शेषा रिपवः । एवं शत्रुमित्रोदासीना ग्राह्याः ॥२—६॥

धनुर्गुरोर्मूलत्रिकोणम् । मेषः कुजस्य । कुम्भो मन्दस्य । वृषभश्चन्द्रस्य ।

---

१ 'रि' ख, ब, य. २ 'शब्बधरदिन' ख.

---

1 'भावाद्विज्ञा' ख, ग, ज, झ. 2 'यंब' ख, ग, ज, झ. 3 वर्जा ग्र' क, घ, ङ, च. 4 'षा मित्राणि' ख, ग, छ, ज, झ.

---

* ज ञ द ध प पाठेष्वेतत्पद्यस्य स्थाने एवं दृश्यते—
सिंहवृषमेषकन्याचापतुलाकुम्भराशयः क्रमशः ।
मूलत्रिकोणसंज्ञास्सूर्यादीनान्तु खेटानाम् ॥

‡ पद्यमिदं मपाठे नास्ति.

[1]£षष्ठत्रिकोणसंस्थाः स्वस्थानान्निधनसप्तमोपगताः ।
मूलत्रिकोणरहिता रिपवस्तात्कालिकाः कथिताः ॥९॥

दशमायव्ययधनगा[2]श्चतुर्थदुश्चिक्य[3]संस्थितास्सुहृदः ।
अरयः परेषु राशिष्वितीह केचित् प्रभाषन्ते ॥१०॥

---

सिंह आदित्यस्य । कन्या बुधस्य । तौलिः शुक्रस्य । एते सप्त राशयः सप्तग्रहाणां मूलत्रिकोणानि ॥ ७ ॥

स्वमूलत्रिकोणभवनाच्चतुर्थपञ्चमद्वितीयनवमाष्टमव्ययस्वोच्चराशिस्थितो ग्रहो बन्धुर्भवति । तत्कालबन्धुरित्यर्थः । पूर्वोक्तबन्धुरुक्तस्थानगतश्चेदधिकबन्धुः । शत्रुर्वा [1]यावत्काल[2]मुक्तराशौ स्थितस्तावद्बन्धुः ॥८॥

ग्रहस्थितभवनात् षष्ठाष्टमत्रिकोणसप्तमराशिषु स्थितो ग्रहः स्थितस्य ग्रहस्य रिपुर्भवति । सहगतश्च रिपुः । एतानि भवनानि स्वमूलत्रिकोणं न स्यात् । तात्कालिकरिपवः कथिताः ॥९॥

ग्रहस्थितभवनाद् दशमायव्ययधनचतुर्थ[3]दुश्चिक्यसंस्थिता ग्रहाः स्थितग्रहस्य सुहृदो भवन्ति । अपरेषु राशिषु स्थिताः ग्रहाः शत्रवो भवन्ति । एवं केचित् [4]प्रभाषन्ते । सर्वत्र स्थाने मूलत्रिकोणगतो बन्धुर्भवति ॥१०॥

---

१ 'षष्ठनवमत्रिकोणस्थिताश्च निधनैकराशिसप्तमगाः' घ, च, न, फ, ब. २ 'यतनुगाश्च' क; 'यतनुस्थाश्च' फ. ३ 'संज्ञितास्सु' क, झ, ड, द, ण.

---

1 'वतः कलादुक्त' ग, घ, छ, ज, झ. 2 'वशो ब' ख, ग, घ, छ, ज, झ. 3 'यबतुर्थ' ख, ग, ब, झ. 4 चिद् भाष' ख, ग, छ, ब, झ.

---

£ पद्यमिदं मपाठे नास्ति.

उदये बुधगुरुमनुजा बलिनो मध्ये चतुष्पदार्ककुजाः ।
हिबुकेऽम्बुगामिशशिनो भृगुश्च शेषास्तथास्तमये ॥११॥

बलिनो गुरुरविसौरा[1] दिवसे चन्द्रात्मजो निशि दिवा च ।
रात्रौ शेषाः[2] प्रबलाः सौम्याः शुक्लेऽधमाः कृष्णे ॥१२॥

[3] शुक्ले चन्द्रो बलवानुदगयने दिनकरो बलोपेतः ।
वक्रानुवक्रकाले[4] शेषाः स्निग्धाः प्रदक्षिणगाः ॥१३॥

---

अथ ग्रहराशीनां बलाबलमाह—उदये बुधजीवौ[1] बलिनौ । द्विपाद्राशयश्च बलिनः । दशमराशावर्ककुजौ चतुष्पाद्राशयश्च बलिनः । चतुर्थे अम्बुराशयः शशिशुक्रौ च बलिनः । सप्तमे शशिराहू कीटराशयश्च बलिनः । तत्र कर्कटकश्चतुर्थे चास्ते च बलवान् कीटजलभावात् ॥११॥

पूर्वाह्णे गुरुर्बलवान् । मध्याह्ने रविर्बलयुतः । अपराह्णे मन्दोऽपि बलवान् । बुधो दिनरात्रसमबलः । चन्द्रोऽपि पूर्वरात्रे बलवान् । कुजो मध्यरात्रे । अपररात्रे शुक्रो[2] बलवानिति । सौम्यग्रहास्सर्वे शुक्लपक्षे बलयुताः । क्रूराः कृष्णपक्षे ॥१२॥

शुक्लपक्षे बलयुतश्चन्द्रः । उत्तरायणे सूर्यो बलवान् । वक्रानुवक्रकाले शेषा

---

१ 'रविगुरुशुक्रा' ख, ग, घ, च, झ, ञ, ट, ढ, ध, न, प, फ.   २ 'षास्सौम्याः शुक्ले कृष्णेऽधमाः प्रो' ढ, ब, य.   ३ 'शुभ्रे च' प.   ४ 'लेऽप्यन्ये स्नि' क; लेष्वन्ये स्नि' ख, ग, घ, ङ, च, छ, ज, झ, ट, द, न, प, फ, ब, य.

---

1 'ह्नगने बु' ग, झ, ञ.   2 'क इति' ख, ग, छ, ज.



मेषूरणहिबुकाभ्यां बलवत्पूर्वं[१] ततोऽपरं विबलम् ।
होरा गुरुबुधपतिभिर्दृष्टा[२] तैरेव युक्ता वा* ॥१४॥

सिंहाद्या दिवसबलाः कुम्भधराद्या निशासु बलवन्तः ।
उत्तममध्यमविबलाः केन्द्राद्याः[३] प्राप्तभाव्य[४]निर्वृत्ताः ‡ ॥१५॥

---

बलयुताः । यस्माद्भागाद् ग्रहो वक्रमारभते वक्र[1]निवृत्तिश्च ततस्तत्र[2] यावतः कालाद् गच्छति तावद् ग्रहो बलयुतो भवति[3] । प्रदक्षिणगाः स्निग्धाः रश्मिविकसिताश्च ग्रहयुद्धे उत्तरभागस्थाश्च बलयुता भवन्ति ॥१३।

उदयवशाद्दशमादारभ्य[4] तृतीयराश्यन्तं राशिषट्कं बलयुतम् । हिबुकादिराशि[5]–षट्कं बलरहितम् । होरा गुरुबुधपतिभिर्दृष्टा युक्ता वा बलयुता भवति[6] ॥१४ ॥

$ सिंहाद्यं राशिषट्कं दिनबलयुतम् । कुम्भाद्यं निशि बलयुतम् । उदयकेन्द्रगता राशयः उत्तमबलयुताः । उदयादूर्ध्वराशिकेन्द्रगता राशयो मध्यमबलाः । उदयात्पूर्वोदितराशिकेन्द्रगता बलरहिताः ॥१५॥

---

१ 'र्वं परं ततो वि' ख. २ 'ष्टास्तैरेव' न, ब, य. ३ 'केन्द्रप्राप्तैर्विनिर्वृताः' ट. ४ 'प्राप्तैष्यनि' च, झ, ञ, द, ब.

---

1 'क्रान्ति' छ, झ, ञ. 2 'पुनस्तत्र' ख, च, छ, ज, झ, ञ. 3 'ति । दक्षिणगाः' ग, छ. 4 'शमभागादारभ्य तृतीयराश्यन्तं राशिषट्कबलयुता हिबु' ग, झ, ञ. 5 'कादिषट्कं' ख, ग, छ, ज. 6 'वन्ति' ख, ज, झ, ञ.

---

* इतोऽनन्तरं दपपाठयोः 'मन्दार०' (श्लो० १८) ततः 'सिंहाद्या' (श्लो० १५) इति क्रमः । यपाठे श्लोकत्रयं (१५, १६, १७) नास्ति । ‡ इतोऽनन्तरं श्लोकद्वयं बपाठे नास्ति । $ 'सिंहाद्या राशिषट्का दिनबलयुताः । कुम्भाद्या निशि बलयुताः' । इत्येव ग्रन्थेषु दृश्यते ।

होरा शशियुक्ता वा द्विपदा दिवसे चतुष्पदा रात्रौ ।

बलिनो दिनावसाने शेषा नान्यत्र[१] बलवन्तः ॥१६॥

तात्कालिकनैसर्गिकसाम्पातिकमित्रशत्रुमध्यस्थम् ।

बलमपि[२] चतुष्प्रकारं स्थानाश्रयकालचेष्टाभिः ॥१७॥

---

शशियुक्ता होरा बलवती पूर्वपक्षचन्द्रस्चेत्[1] । क्षीणचन्द्रयुता दुर्बला । द्विपदा ग्रहराशयो दिने बलयुताः । चतुष्पाद्ग्रहराशयो रात्रौ बलयुताः । कीटराशिग्रहाः सन्ययोर्बलयुता इति । उक्तस्थानकालादन्यत्र[2] क्षीणबला ग्रहराशयः १६॥

स्थानाश्रयकालचेष्टाभिश्चतुर्भिस्तात्कालिकनैसर्गिकसाम्पातिकमित्रशत्रुमध्यस्थं चतुष्प्रकारं बलं ज्ञातव्यम् । स्वोच्चस्वदृगाणस्वनवांशस्वभवनस्वमूलत्रिकोणगस्य स्थानबलमुक्तम् । 'उदये गुरुबुधमनुजा' इत्यनेन आश्रयबलमुक्तम् । 'बलिनो गुरुरविसौरा' इत्यनेन कालबलमुक्तम् । 'शुक्ले चन्द्रो बलवान्' इति चेष्टाबलमुक्तम् । 'होरा शशियुक्ता' इत्यनेन तात्कालिकबलमुक्तम् । 'मन्दारसौम्य' इत्यनेन नैसर्गिकबलमुक्तम् । 'उत्तममध्यमविबला' इति, 'दशमायव्ययधनगा' इति श्लोकद्वयेन साम्पातिकमुक्तम् । 'जीवो रवेस्तु मित्रम्' इति शत्रुमित्रोदासीनभाव [मु ? उ] क्त [म् ? :]। एवमष्टधा ग्रहाणां बलमुक्तम् । ग्रहाणां बलाबलं ज्ञात्वा फलं योजयेत् ॥१७॥

---

१ 'षाश्चान्यत्र ब' ट. २ 'लमिति च' ख.

---

1 'क्षश्चे' ग, झ, ञ. 2 'त्र बलक्षीणा ग्रह' ख, ग, ञ, ञ; 'त्र बलक्षीणग्रह' झ.

* मन्दारसौम्यवाक्पतिसितचन्द्रार्का यथोत्तरं बलिनः ।
नैसर्गिकबलमेतद् बलसा[१]म्येऽस्माद् बलाधिक्यम् ॥१८॥

उच्चास्तुलाजकन्याः [२]क्रमेण झषमृगकुळीरगोपतयः ।
सौरार्कसौम्यभृगुकुजगुरुशशिनां सप्तमा नीचाः ॥१९॥

विंशतिरथ दशभागास्त्रि[३]पञ्चकं सप्तविं[४]शतिश्चैव ।
अष्टाविंशतिरुच्चेषूच्चाः पञ्च त्रयश्चैव ॥२०॥

---

मन्दाद् बली कुजः । कुजाद् बली सौम्यः । सौम्याद्[1] बली गुरुः । जीवाद् बली शुक्रः । शुक्राद् बली चन्द्रः । चन्द्राद् रविर्बलवान् । सर्वेषां ग्रहाणां बल-साम्ये अनेन बलयुतं ग्रहं गृह्णीयाद् इति ॥१८॥

तौलिर्मन्दस्योच्चः, मेषो नीचः । मेषोऽर्कस्योच्चः, तौलिर्नीचः । बुधस्य कन्यो-च्चः, मीनो नीचः । मीनः शुक्रस्योच्चः, कन्या नीचः। मकरः कुजस्योच्चः,[2] कुळीरो नीचः । कर्कटको जीवस्योच्चः, मकरो नीचः । वृषश्च[3]न्द्रस्योच्चः, वृश्चिको नीच इति ॥१९॥

उक्तेषु[4] राशिषु अत्युच्चसंज्ञं त्रिंशद्भागमाह—विंशतिर्मन्दस्य । दशार्कस्य[5] ।

---

१ 'म्येऽप्यधिकचिन्तार्थम्' ञ, ट, द. २ 'झषनक्रकर्किगो' ग, ञ, द, ध, प; 'नक्रझषकुळीरगो' ट. ३ 'कास्सप्त' ट. ४ 'तिश्चापि' ट.

---

1 'द् गुरुः । जीवाच्छुक्रः, शुक्राच्चन्द्रः' क, ख, ग, घ, ङ, च, छ, ञ. 2 'च्चं कर्कटको नी' ज, झ, ञ. 3 'षभश्च' ग, झ, ञ. 4 'षु ग्रहराशिषु' क, घ, ङ, च. 5 'श चार्कस्य' ख, ग, छ, ज, झ, ञ.

---

* पद्यमिदं धपपाठयोर्नास्ति ।

* सुखिनः[१] प्रकृष्टकर्मा[२] राजप्रतिरूपको[३]ऽथ राजा[४] च ।

एकद्वित्रिचतुर्भिर्जायन्ते[५]ऽतः परं दिव्याः[६] ॥२१॥

इति[७] कृष्णीयशास्त्रे[८] द्वितीयोऽध्यायः ।

---

पञ्चदश सौम्यस्य । सप्तविंशतिः शुक्रस्य । अष्टाविंशतिः कुजस्य । पञ्च जीवस्य । त्रयश्चन्द्रस्य । एवमतिनीचो[1] ज्ञेयः ॥२०॥

एकोच्चग्रहदृष्ट्या सर्वतस्सुखिनो भवन्ति । जातोऽप्यायुष्मान् भवति । द्वौ ग्रहौ उच्चगतौ वीक्षेते सर्वकर्मभोक्ता[2] । त्रय उच्चगता वीक्षन्ते राजा भवति । चतुर्भिर्वीक्षितश्चेच्चक्रवर्ती[3] भवति । अतः परं दिव्याः । पञ्चभिः षड्भिर्वा[4] उच्चसहितैर्वीक्षितश्चेद्देवसमो[5][6] भवति । इदं[7] प्रश्नजातकयोः संग्राह्यम्[8] । नीचग्रहवीक्षितश्चेद्[9] अनायुष्मान् नीचो वा भवति[10] । नरककर्मं च क्लेशश्च । बहवो नीचस्था[11] नीचाश्चण्डालाश्च[12] जातेरधमा[13] भवन्ति जाताः[14] ॥२१॥

[इति कृष्णीयव्याख्यायां चतुरसुन्दर्यां द्वितीयोऽध्यायः। ]

---

१ 'सुखितः' ग, ट, द, ध, न. २ 'कार्या' ख, ङ, ज, ञ. ३ 'पकाश्च' ख, घ, ङ, च, ञ, फ, ब. ४ 'राजानः' ख, घ, ङ, च, ञ, फ. ५ 'न्ते पञ्चभिः परम्' ब, य. ६ 'व्यः' ख. ७ 'इति द्वि' ट. ८ 'ये द्वि' झ.

---

1 'चं ज्ञेयम्' ख, छ, ज, झ, ञ. 2 'क्तारः' ज 3 'क्षितश्चक्र' ख, ग, छ, ज, ञ; 'क्षते चक्र' झ. 4 'श्चषड्भि' ग, झ, ञ. 5 'श्चेद्देव' ख, ज झ, ञ. 6 'समा भवन्ति' ख, ग, ज, झ, ञ. 7 'अयं प्र' ख, ग, छ, ज, झ, ञ, 8 'ह्यः' ख ग. छ ज, झ, ञ. 9 'चग्रहे अनायुर्वा नो' ख, ग, छ, ज, झ, ञ. 10 'ति । नष्टं नश्यति नर' ख, ज. 11 'निःस्वाश्च' ख, ज, झ, ञ. 12 'श्च स्वजाते' ख, ग, ज, झ, ञ. 13 'माश्च भ' ख, ग, ज, झ, ञ. 14 'ताः । ग्रहस्थि' ख, ग, छ, ज, झ, ञ.

---

* पद्यमिदं ञपाठे नास्ति ।

## तृतीयोऽध्यायः

षष्ठं द्वितीयभवनं द्वादशमेकादशं न पश्यन्ति ।
स्वस्थानाद्वीक्षन्ते[१] ग्रहास्तदन्यानि[२] भवनानि ॥१॥

वीक्षेते रविभौमावूर्ध्वं शुक्रेन्दुजौ कटाक्षेण ।
इन्दुगुरू समदृष्ट्या[३] राहुः सौरोऽप्यधोदृष्ट्या* ॥२॥

---

अथ वीक्षणप्रकारमाह[1]—ग्रहस्थितभावादारभ्य षष्ठं द्वितीयभवनं द्वादशमेकादशं ग्रहा न वीक्षन्ते । अन्यानि भवनानि वीक्षन्ते । एतज्जातकलक्षणम्[2] ॥१॥

वीक्षेते[3] निरीक्षेते । रविभौमौ ऊर्ध्वदृष्ट्या वीक्षेते । शुक्रेन्दुजौ तिर्यग्दृष्ट्या । इन्दुगुरू समदृष्ट्या । सर्पसौरौ अधोदृष्ट्या । दर्शनलक्षणं सर्वत्र ग्राह्यम् । चोराहृतप्रकरणे ऊर्ध्वदर्शनग्रहदृष्टे गृहस्योर्ध्वभागं विपाट्य अन्तर्गतश्चोरः । अधोदर्शनग्रहदृष्टे लग्ने भूमिं भित्त्वान्तर्गतः । तिर्यग्दर्शनग्रहदृष्टे भित्तिं प्राकारं वा भित्त्वान्तर्गतः । समदर्शनग्रहदृष्ट्या द्वारेणान्तर्गत इति । एवं द्रव्यभोजनेषु[4] योजयेत्[5] । यथा चोरो द्रव्यमाहरति अधोभागं विपाट्य वा द्वारेण वा ऊर्ध्वं भित्त्वा वा तथा वाच्यम् । द्रव्यञ्च भूमौ स्थितम् उपरि स्थितं वा भूमेरधः स्थितं वा योजयेत् । द्रव्यस्य मुखचिह्नं

---

१ 'न वीक्ष' ख, घ, ब, य. २ 'स्तथान्यानि' क, ख, ग, घ, ङ, छ, ज, ञ, ट ड, ढ, ण. ३ 'ष्ट्याधो यमसर्पौ निरीक्षेते' ग, ञ, ट, द, ध, प.

---

1 'अथ दृष्टिलक्षणप्रकारमाह' क, घ, ङ. 2 'एवं जा' ख, च, छ, झ, ञ 3 'ष्ट्या निरीक्षेते' ग, छ, झ, ञ. 4 'भा' ख ज, झ. 5 'षु चिन्त्यम्' ख, ग, छ, झ, ञ,

---

*इतः परं यपाठो नास्ति ।

च ग्रहदर्शनभागे वदेत् । यथा सप्तमराशिश्चरति[1] चतुष्पाद्द्विपात्सङ्कुलपाद्वा[2] तथा चरन् चोरो द्रव्यमाहरत् । पूर्वोक्तवनग्रामजलादिषु चोरो द्रव्यं स्थापयेदिति सप्तमस्थग्रह राशिवशेन कथयेत् । आरूढराशिवशात् चरस्थिरोभयाद् बहिर्गृहे वा गृहान्ते[3] वा पूर्वं द्रव्यस्थितस्थानं बदेत् । तत्र[4] ऊर्ध्वमुखे ऊर्ध्वस्थितं द्रव्यम् । अधोमुखे अधस्थितं द्रव्यम् । तिर्यङ्मुखे भूमौ स्थितं[5] द्रव्यम् इति[6] राशिग्रहवशाद्वाच्यम्[7] । चोरोऽप्येवम्मुखः । तत्र[8] उदयराशिस्तिर्यङ्मुखसहवर्ती[9] स्याद् गृहाद् बहिरासन्नश्चोरो[10] गृहे स्थितं द्रव्यं हस्तेनाह[11]रदिति[12] वाच्यम् । आरूढराशिकेन्द्रैर्वा तत्रस्थैर्ग्रहैर्वा[13][14] द्रव्यं[15] निर्देश्यम् । तत्रारूढवशात्[16][17] चोरश्चरन् हरति । तदस्ते बलयुते आसनस्थो[18] हरति । तद्दशमे बलयुते स्थित्वा हरति । चतुर्थे बलयुते शयितो[19] हरति[20] । तत्रोदयवशात् प्रश्नकाले चोरप्रवृत्तिं पूर्ववद्वदेद् उदयकेन्द्रग्रहराशिभिरिति ॥२॥



---

1 'शिरुदये चर' च. 2 'त्सकलपा' झ. 3 'वा गृहे वा गृहा' झ, ञ. 4 'तत ऊ' क, ख, घ, ङ, छ. 5 'तमिति राशि' क, ख, घ, ङ, च, छ, ज; 'तं वदेत् । राशि' झ. 6 'ति पापराशि' ग, छ, ञ. 7 'ग्रहबलाद्वा' ख, च, ज. 8 'भय' ख, ग, च, ज, झ, 9 'खवर्ती' क, ङ; 'खसमवर्ती' घ, ञ. 10 'हिश्चो' झ. 11 'स्तेन हरतीति वा' च. 12 'ति वदेत्' ग, छ, झ, ञ. 13 'तत्स्थै' ख, ग, छ, ज, झ. 14 'हैर्द्र' झ; 'हैर्वाच्यं द्रव्यञ्च नि' ग. 15 'व्यं च नि' ख, ज, झ. 16 'अत्रा' झ. 17 'ढो बलवान् चो' क, घ, ङ, च; 'ढबलात् चो' ख, ग, ज, झ. 18 'त्रस्थो' क, घ, ङ. च. 19 'यित आहर' क, ख, ग, घ, ङ, छ, ज, झ. 20 'ति इति त' ग, झ.

दर्शनफलमपि दद्युस्त्रिकोणसप्तमचतुर्थदशमगताः ।
अर्धफलं सम्पूर्णं पादोनं पादमन्यत्र ॥३॥

चतुरेकविंशषोडशनवसंख्याः पञ्चसप्तदशकिरणाः ।
मन्दगतिचन्द्रभार्गवशशिसुतरविभौमजीवानाम् ॥४॥

सर्वं पश्यति लग्ने कुजस्तृतीयाययोश्चतुर्भागम्[१] ।
सार्धत्रिकं त्रिकोणे सार्धचतुष्कं चतुर्थस्थः ॥५॥

रश्मीञ्जामित्रगतो दशमे द्वावर्धमीक्षते नवमे ।
भौमश्शेषाणामपि विभाज्यमिति[२] केचिदिच्छन्ति ॥६॥

---

ग्रहदर्शनवशात् शुभाशुभं[1] वा लाभालाभं वा यद्यत् फलं ग्रहस्योक्तं तस्यार्धं फलं ददाति त्रिकोणयोः स्थितो ग्रहः । लग्नसप्तमस्थः[2] सर्वं ददाति । चतुर्थस्थितः पादोनं फलं ददाति । दशमस्थितः पादम्, स्वोक्तफलात् पादं ददाति । नष्टादिवस्तुनः संख्याज्ञाने विनियोगः ॥३॥

अथ ग्रहरश्मीनाह—मन्दस्यांशवश्चत्वारः । चन्द्रस्यैकविंशतिः । शुक्रस्य षोडश । बुधस्य नव । सूर्यस्य पञ्च । भौमस्य सप्त । जीवस्य दश । एतैः किरणैः पूर्वोक्तफलं विभज्य कथयेत् ॥४॥

सर्वं पश्यति लग्ने कुजः । भौमो लग्नगतः सर्वं किरणं पश्यति । तृतीयाययोः स्थितः रश्मीनां चतुर्भागं पश्यति । त्रिकोणस्थितो भौमः स्वोक्तकिरणार्धं त्रिकसहितं पश्यति । अर्धयुतं चतुष्कं चतुर्थस्थः पश्यति ॥५॥

जामित्रगतो भौमः सर्वान् किरणान् पश्यति । दशमे स्थितः द्वौ किरणौ पश्यति । नवमे स्वोक्तकिरणार्धं पश्यतीति ।

भौमग्रहणं ग्रहोपलक्षणार्थम् । सर्वेषां ग्रहाणामेवं विभज्य फलं कथयेत् ।

---

१ 'यायुषोश्च' ख, घ, च, ब. २ 'भज्य' ब, छ, द, फ.

---

1 'नात्पापपुण्यं शुभा' ब, ग, घ, च, छ. ज, झ, ञ. 2 'मगतः' ब, ग, छ, ज, झ. ञ.

१·
मित्रस्वर्क्षेत्रोच्चत्रिकोणसहिता ग्रहाः फलं दद्युः· ।
२
पादं पादेनोनं सम्पूर्णञ्चात्र फलमर्धम् ॥७॥
३
* नीचार्कगता विफला रिपुभवनगता भवन्ति चाल्पफलाः ।
निहता ग्रहेण हीनांशवोऽपसव्येन संयुक्ताः ॥८॥

---

उक्तप्रकारं ग्रहाः फलं ददतीति केचिदाचार्या वदन्ति । इदानीं पूर्वोक्तमेव ग्राह्यम् । ये ग्रहाः केन्द्रत्रिकोणतृतीयैकादशेषु स्थिताः पश्यन्ति तेषां किरणविभागं विभज्य यावत्संख्या अंशवस्तावत्संख्यानं चोराहृतद्रव्यं भवति । एवं सर्वत्र प्रश्ने द्रव्यस्य संख्या वाच्या । पापग्रहैः पापफलं[1] भवति । शुभग्रहैः शुभफलम् ॥६॥

पूर्वोक्तस्थानगतग्रहरश्मिर्यथा फलं ददाति तदुच्यते मित्रेति[2]— मित्रक्षेत्रगतः पादं फलं ददाति । स्वक्षेत्रगतः पादोनफलं ददाति । उच्चगतः सम्पूर्णं फलं ददाति । त्रिकोणगोऽर्धं[3] फलं ददाति । एतत् फलोपयोगलक्षणम् ॥७॥

नीचराशिस्थितग्रहकिरणा विफला भवन्ति । तथा मूढग्रहकिरणाः । शत्रु-राशिस्थितग्रहकिरणाः स्वल्पफलदा भवन्ति । युद्धपराजिताश्च हीनांशवश्चन्द्रस्य वा ग्रहस्य वा दक्षिणभागस्था ग्रहा अल्पफलदा भवन्ति । स्वक्षेत्रस्वोच्चमित्रगाश्चेत् स्वोक्तफलदा एव भवन्ति । चोराहृतप्रश्ने ये विफला रश्मयस्तावत्संख्यं सस्यं वा फलं वा चोरैर्भक्षि-

---

१ 'त्रस्वोच्चर्क्षगतास्त्रिको' ग, द, ध, प. २ 'र्णफलं तथार्धञ्च' ञ, द, ध, प.
३ 'पापफलाः' ग.

---

1 'लमेव' ख, ग, छ, ज, झ. 2 'ति इति चेत्तत्राह— मि' क. 3 'णगतोऽर्धं' ख, ग, ज, ञ.

---

* पद्यमिदं ञपाठे नास्ति ।

स्तनपानवया भौमष्षोडशवर्षो भृगुर्बुधस्याष्टौ ।
त्रिंशद् गुरोरथेन्दोस्सप्ततिरर्कस्य पञ्चाशत्* ॥९॥

राह्वा[1]र्क्योरब्दशतं विंशतिरपि चापरै[2]र्विनिर्दिष्टम् ।
स्वस्वा[3]मिनां वयो यत्तदेव तेषां गृहाणाञ्च $ ॥१०॥

तम् । अन्यच्छु[1]भवीक्षितरश्मिसंख्यं द्रव्यं प्रष्टा लभते । मित्रग्रहस्थितवीक्षिते लग्ने[2] शुभवीक्षितरश्मिसंख्यं लाभं वदेत् । अन्यन्नश्यति ॥८॥

कुजस्त्रिवर्षवया[3]ः । चतुर्थवर्षादारभ्याष्टवर्षपर्यन्तं[4] वयो बुधस्योक्तम् । नव [म] वर्षादारभ्य षोडशवर्षपर्यन्तं[5] शुक्रस्य । सप्तदशवर्षादारभ्य द्वात्रिंशद्वर्षान्तं[6] गुरोः । त्रयस्त्रिंशा[7]द्वर्षादारभ्य पञ्चाशद्वर्षान्तमादित्यस्य । एकपञ्चा [श ? शा] दारभ्य सप्ततिवर्षान्तं चन्द्रस्य ॥९॥

एकसप्ततिमारभ्य शतवर्षं शनेः फणीन्द्रस्य चोक्तम् । विंशतिसंयुक्तं शतमपरे वदन्ति । ग्रहवत् स्वेषां भवनानां वर्षमुक्तम् । ग्रहसमवर्षं पुरुषस्य वदेत् । ग्रहस्थितराशौ येंऽशा ग्रहभुक्तास्तद्वद्वत्सरं त्रिवर्षादिषु संयुज्य वदेत् । स्वराशिस्वद्रे-

---

१ 'ह्वर्क्यो' छ, ज, ध, प. २ 'रिति चा' द. ३ 'मिनो व' ख, ज, ञ.

---

1 'च्छुभरश्मिवोक्षितं रश्मिसंख्यद्रव्यं' क, ख, घ, ङ, ज. 2 'हरश्मिवी' ख, ग, छ, ज, झ, ञ. 3 'याः । पञ्चवर्षादारभ्याष्टवर्षान्तं' क, ख, ञ. 4 'वर्षान्तं' ग, घ, ङ, च, झ, ञ. 5 'वर्षान्तं' झ, ञ. 6 'भ्य त्रिंश' ग, छ, झ, ञ. 7 'शादार' ञ.

---

* इतोऽनन्तरं टपाठे ११ तमपद्यं लिखितम् । $ पद्यमिदं टपाठे नास्ति.गजदधपाठेषु एतत्पद्यानन्तरं 'द्वात्रिंशद्' इति (१२ तम) पद्यं लिखितम् ।

£ बालकुमारयुवानो मध्यो मध्याधिकः पलितवृद्धौ च ।
कुजबुधभृगुगुरुशशभृत्तपनार्कसुताः परैः कथिताः ॥११॥

द्वात्रिंशदेकसप्ततिपञ्चाशद्विंशतित्रिंविशशतम् ।
भृगुशशिरविगुरुसोमजभौमार्कीणां वदन्त्यन्ये ॥१२॥

१ २
कण्टककेन्द्रचतुष्टयसंज्ञा लग्नास्तद्धिबुकदशमानाम् ।
३ ४
प्राग्रेखागतराशिं होरेत्याचक्षते यवनाः ॥१३॥

---

त्रकाणस्वांशकेषु ग्रहे स्थिते ग्रहस्योक्तं विभज्य कथयेत् । परवर्गस्थिते राशेरंशकस्य वा यदुक्तं तदर्धं वा अर्धार्धं वा ग्रहवर्षे संयुज्य वदेत् । पुरुषस्य यस्य ग्रहस्योक्तं वयो वर्तते तत्र शुभाशुभं मरणजीवनं [च] ग्रहेण जायते इत्यर्थः ॥१०॥

कुजो बालः । बुधः कुमारः । शुक्रो युवा । गुरुर्मध्यवयाः । चन्द्रो मध्याधिकः । तपनः पलितः, सितरोमा इत्यर्थः । शनिरतिवृद्ध इति[1] ॥११॥

द्वात्रिंशत् शुक्रस्य । एकसप्ततिश्चन्द्रस्य । पञ्चाशदर्कस्य । विंशतिर्गुरोः । त्रिंशद्वर्षा बुधस्य । विंशतिर्भौमस्य । शतं राह्वार्क्योः इति केचिद्वदन्ति । गुरुकुजयोर्विंशतेरारभ्य एकत्रिंशद्वर्षान्नयेत् । अन्येषां पूर्ववत् । अनेन चोरवयो विज्ञायते ॥१२॥

उदयसप्तमचतुर्थदशमानां कण्टककेन्द्रचतुष्टयसंज्ञाः । उदयगतं राशिं होरेत्याचक्षते यवनाः ॥१३॥

---

१ 'केन्द्रचतुष्टयकण्टकसंज्ञा' क, ख, ग, घ, ङ, च, छ, ज, झ, ड, ढ, ण, द, ध, न, प, फ, ब. २ 'मध्यास्त' क, ख, घ, ङ, च, छ, ज, झ, ञ, ट, ड, ढ, ण, न, फ, ब. ३ 'प्रागेवागत' ख, ध. ४. 'राशिर्होरे' झ.

---

1 'ति वा ॥ अस्य श्लोकस्य पूर्वप्रोक्तस्य द्वात्रिंशेत्यादिपद्यस्य व्याख्या लिख्यते- द्वात्रि' ज.

---

£ अस्य पद्यस्य स्थाने—'बाल्याधिकयुवमध्यास्ततोऽधिकव्यक्ततास्थविरभावाः । कुजबुधभृगुशशिनां दिनकरयमयोर्वदन्त्यन्ये ॥' इति पद्यं गदधपपाठेषु लिखितम् ।

*　१

शशिलग्नस्थानाभ्यां तृतीयसप्तमचतुर्थदशमानि ।

दुश्चिक्यं जामित्रं हिबुकं मेषूरणञ्चापि ॥१४॥

ऊर्ध्वमुखो रविमुक्तो राशिर्युक्तस्त्वधोमुखो ज्ञेयः ।

२

अभिलषितस्तिर्यक् स्यात्तेषां केन्द्राश्च तत्संज्ञाः ॥१५॥

३

ऊर्ध्वमुखो यदि राशिर्होरा प्रश्ने नरस्य सिद्धिकरी ।

अन्ये विफले भवतश्शुभयुतदृष्टे शुभाख्ये च ॥१६॥

---

1

लग्नचन्द्रस्थानयोः भवनयोस्तृतीयं दुश्चिक्यसंज्ञम् । सप्तमं जामित्रम् । चतुर्थं हिबुकम् । दशमं मेषूरणम् । इति संज्ञा ॥१४॥

2　3　4

रविमुक्तराशिरूर्ध्वमुखः । रवियुक्तराशिरधोमुखः अभिलषितस्तिर्यङ्मुखो

5

राशिः । तेषां त्रयाणां केन्द्राश्च तत्संज्ञा भवन्ति सूर्यगतिवशात् ॥१५॥

ऊर्ध्वमुखादिफलमाह—पृच्छकस्य ऊर्ध्वमुखो राशिर्यदि लग्नगतः चिन्ता सिद्धिकरीति वदेत् । अन्ये अधोमुखतिर्यङ्मुखे होरे विफले फलरहिते भवतः । यदि ते शुभयुते शुभदृष्टे वा शुभे भवतः । कार्यस्य परिसमाप्तिर्भवति । चोराहृते ऊर्ध्वमुखे

6　7

उपरि स्थितम्, अधोमुखे भूमेरधस्थितं, तिर्यङ्मुखे भूमौ स्थितं द्रव्यमिति वदेत् । एवं द्रव्यमुखश्च ॥१६॥

---

१ 'मानाम्' ग, ञ, ढ, ध, प. २ 'तं ति' ख. ३ 'लग्ने' ट.

---

1 'स्थयाभं' ख, ग, ज, झ, ञ. 2 'क्तो रा' ग, झ, ञ. 3 'युतो रा' ज, छ, झ, ञ. 4 'स्तिर्यग्राशिः' ख, ग, छ, ज, ञ. 5 'शात् । पृच्छ' ख, ग, ज, ञ. 6 'रधस्थं' ज, झ. 7 'भूमिस्थं' ज.

---

* ङपाठे पत्रस्यैकस्य नष्टत्वाद् इतः परं पञ्चमाध्याये प्रथमश्लोकपर्यन्तं नास्ति ।

क्षित्यम्बुपवनपावकवियन्ति भूतानि पञ्च कथितानि ।
बुधभृगुशनिभौमानां जीवस्यैषां गृहाणाञ्च ॥१७॥

चन्द्रो यं यं राशिं[1] भुङ्क्ते तत्स्वामिभूतमनुकुरुते ।
ग्रहराशयः स्वादिक्स्थाः कुर्वन्त्यात्मीयभूतानि ॥१८॥

* यदि चन्द्रो बलयुक्तः करोति सर्वत्र सलिलमात्मीयम् ।
पृथ्वीं करोति दिनकृच्चान्ये[2] स्वान्येव[3] कुर्वन्ति ॥१९॥

---

अथ ग्रहाणां क्षित्यादिपञ्चभूतसम्बन्धमाह— बुधस्य भूमिः, शुक्रस्य जलम्, शनेरनिलः, कुजस्याग्निः, जीवस्याकाशः । एतानि पञ्च भूतानि पञ्चानां ग्रहाणामुक्तानि । ग्रहस्योक्तानि पञ्च भूतानि ग्रहाणां राशीनां स्वभावानाञ्च वदेत् । भूतानां विषयो नष्टमुष्टिचिन्तासु । ग्रहस्य भूतस्थानादाहृतं द्रव्यं ज्योतिषिको यदाहृतं तस्य स्थानञ्च वदेत् । भूतवशाद् भूमिजलवाय्वग्निखेषु वदेत् । अस्तमयराशिना अस्तगतदर्शन[1]ग्रहेण चोराहृतद्रव्यं यत्र चोरैः स्थापितं तत्स्थानं वदेत् ॥१७॥

यद्यपरपक्षचन्द्रो वा शत्रुनीचगो वा यस्य ग्रहस्य राशिं भुङ्क्ते तत्स्वामिभूतं करोति चन्द्रः । केन्द्रत्रिकोणेषु ग्रहयुतेषु बलयुतग्रहवशात् स्वोक्तं भूतं ग्राह्यम् । ग्रहा न सन्ति चेद् बलयुतराशिवशाद्वदेत् ॥१८॥

पूर्वपक्षचन्द्रः सर्वत्र भावे सलिलं करोति । बलयुतः स्वक्षेत्रस्वोच्चगतोऽपि

---

१ 'मिरूपम' द. २ 'स्वात्मीयभूतानि ।' च, झ. ३ 'व भूतानि' ख, छ, न.

---

1 'स्तदर्श' ख, ग, छ, ज, झ, ञ.

---

* पद्यमिदं बपाठे नास्ति ।

१
चम्पककुरण्डशशरुधिरतुल्यशुकहंसचित्रनीलनिभाः ।
गुरुसूर्यभौमबुधशशिभृगुसौराणामिमे वर्णाः ॥२०॥
आत्माकृतिवर्णादीन् ग्रहस्तु न जहाति परगृहस्थोऽपि ।
२
तत्स्वाम्याकृतिवर्णौ व्रजतीत्यपरे व्यवस्यन्ति ॥२१॥
३
मेषवृषमिथुनकर्कटकानां वर्णोऽधिपस्य निर्दिष्टः ।
४
तेषां त्रिकोणयोरपि स एव वर्णः समाख्यातः ॥२२॥
५
इति कृष्णीयशास्त्रे तृतीयोऽध्यायः ।

---

सलिलमेव करोति । सूर्ये बलरहिते चन्द्रवत् । बलयुते पृथिवीं करोति । अन्ये ग्रहाः[1] स्वानि भूतानि कुर्वन्ति ॥१९॥

इमे ग्रहाणां वर्णाः—गुरुश्चम्पकपुष्पवर्णः । सूर्यः कुरण्डपुष्पवर्णः[2] । भौमः शशरुधिरतुल्यवर्णः[3] । बुधः शुकवर्णः । चन्द्रो हंसवर्णः । शुक्रश्चित्रवर्णः[4] । सौरो नीलवर्ण इति ॥२०॥

स्वक्षेत्रस्वोच्चमित्रगते ग्रहे स्वाकृतिश्च स्वभावश्च स्ववर्णश्च यद्यदुक्तं यद्यद्वक्ष्यति तत्सर्वं वदेत् नष्टमुष्टिचिन्तासु । यद्यबले ग्रहे राशिवर्णंश्च ग्रहवर्णंश्च संयुज्य वदेत् । राशौ बलयुते राशिवर्णं प्रधानं वदेत् ॥२१॥

मेषादीनां चतुर्णां राशीनां स्वाधिपतिवर्णः समादिष्टः । तेषां त्रिकोणयोरपि स एव वर्णः समाख्यातः । मेषवन्मेषत्रिकोण इत्यादि ॥२२॥

[इति कृष्णीयव्याख्यायां चतुरसुन्दर्यां तृतीयोऽध्यायः ।]

---

१ 'करण्ड' क, ख, घ, च. २ 'त्यन्ये व्य' द. ३ 'स्य सन्दिष्टः ।'क, ग, छ, झ, ञ, ट, द, ध, प; 'स्य संदृष्टः' ब. ४ 'व एव वर्णास्समाख्याताः' झ, ध. ५ 'ये तृ' झ.

---

1 'स्वात्मीयभूतानि कुर्वन्ति' ग, छ, झ, ञ. 2 'करण्ड' क, ख, घ, ङ, च, छ, झ, ञ. 3 'त्यनिभः' ख, ग, छ, ज, झ, ञ. 4 'क्रस्सर्ववर्णः' ख, ग, घ, छ, ज, झ, ञ.

## चतुर्थोऽध्यायः

शुष्का रविकुजसौरा भृगुचन्द्रमसौ जलात्मकौ [१]भवतः ।

आश्रयगौ [२]गुरुसौम्यौ बलिनावित्युक्तमाचार्यैः ॥१॥

वृश्चिकवृषकर्कटकास्सप्त[३]मगृहमकरमत्स्यकुम्भधराः ।

सजला राशिष्वेते विजलाश्शेषास्समाख्याताः ॥२॥

जलवत्य[४]जलेन गतेऽधस्ताज्जलमुपरि भवति विपरीते ।

[५]सजलद्वयसम्पाते प्रभूतमुदकं विनिर्देश्यम् ॥३॥

---

रविकुजसौराः शुष्कग्रहाः । भृगुचन्द्रौ[1] जलग्रहौ । आश्रयराशिवर्तिनौ गुरुसौम्यौ विबलौ सबलौ वा आश्रयग्रहौ । नष्टादिषु वर्णार्द्रशुष्कादयो प्र ह्याः ॥१॥

वृश्चिकवृषकर्कटकतुला[2]मकरमत्स्यकुम्भधराः जलराशयः । मेषमिथुनसिंहकन्याधनूंषि स्थलराशयः ॥२॥

एतेषां प्रयोजनमाह—जलवति राशौ अजलग्रहे स्थिते कूपादीन् पृच्छति चेदधस्ताज्जलमस्तीति वदेत् । यदि स्थलराशौ जलग्रहे स्थिते उपरि जलमस्ति अधस्तान्नास्ति ।

---

१ 'ज्ञयो' ख, ग, छ, ज, झ, ञ, ट, द, प. २ 'म्यौ विजलावि' झ; 'म्यौ सबलावि' ञ, ब; 'म्यौ सजलावि' ट. ३ 'ममृ मकर' ग, झ, ञ, ध, प, फ, ब; 'ममथ मक' क, ङ, च. ४ 'ले च ग' क. ५ 'जलवद्द्वयस' ग, छ, झ, ञ, ट, द, ध, प.

---

1 'न्द्रौ बलग्र' ग, ञ. 2 'रकुम्भमीना जल' ख, ग, छ, ज, झ, ञ.

पितृमातृसहजभार्यात्ममित्रतनयारयो व्यवस्थेयाः ।
अर्कशशिसौम्यभार्गवजीवधराजार्कजैस्सततम्[१] ॥४॥[२]

पितृपक्षौ भौमयमौ मातुः पक्षा बुधोशनोऽङ्गिरसः ।
पुंग्रहराश्योर्विषमाः स्त्रीग्रहराश्योस्समास्संज्ञाः ॥५॥

राशिग्रहौ सजलौ चेत् प्रभूतमुदकमस्तीति वदेत् । अजलद्वये नास्तीति वदेत् । वर्षप्रश्ने एवमेव वदेत् । गोक्षीरश्च । अथवा बलवच्चेच्छत्रेणैवं वदेत् । वर्षप्रश्ने तोयासन्ने वा तोयदर्शी वा आर्द्रद्रव्यं स्पृशन् वा पृच्छति यदि तदास्तीति वदेत् । अथवास्ति नास्ति इति वा शब्दः श्रूयते तदा तदनुरूपं वर्षं वदेत् । तत्र बुधः अन्यग्रहेण राशिना वा युतश्चेद्रूक्षवातयुतं वर्षम्[1] । बुध एकोऽप्युदयति चेद् बुधक्षेत्रांशद्रेक्काणे वा वर्षरहितं रूक्षवातमस्तीति वदेत् । एवं कुजयुतदृष्टे विद्युन्मेघध्वनियुतमिति[2] वदेत् ॥३॥

रविः पिता । चन्द्रो माता । सौम्यो भ्राता । भृगुर्भार्या । गुरुरात्मसुहृत् । कुजः पुत्रः । राहुमन्दौ शत्रू । यद्भावो ग्रहः शत्रुनीचमूढगतः केन्द्रत्रिकोणे स्यात् क्रूरयुते दृष्टे स मृत इति वदेत् । तत्र पूर्वषट्के ग्रहे स्थिते गृहे मृतः । अपरषट्के परदेशे[3] । ग्रहस्थितराश्यंशकसमभूमिं वदेत्[4] । एवं रोगमरणं वदेत् । यद्भावो ग्रहोऽतिबलवान् तस्य सम्पदं वदेत् । यद्भावो ग्रहो लग्नं न पश्यति तद्भावस्तस्य प्रष्टुर्नास्तीति वदेत् । धनलाभबन्धुसप्तमदशमगतग्रहभावं शुभमिति वदेत् । षष्ठाष्टमद्वादशेषु स्थितग्रहस्य भावः शत्रुवदाचरति । लग्नसप्तमे शुभः ॥४॥

पितृपक्षौ भौमयमौ । भौमो ज्ञातिः । शनिः पितृव्यः । बुधो मातुलपुत्रः ।

---

१ 'म्यभृगुजजो' क, घ, च, छ, ज, ड, ढ, ण.　२ 'जर्ज्रेशाः' क, छ, ड, ढ़, ण.

---

1 'र्षं वदेत् । बु' च.　2 'ध्वनयु' ग, छ, झ, ञ.　3 'शाटविक्षेत्रभूमिश्च व' ख, ज.　4 'त् । एवमन्यान्यप्यूह्यन्ते । एवं रोग' च.

नृपती रविचन्द्रमसौ भूसूनुर्नायकोऽर्कजः[१] प्रेष्यः ।
सचिवौ भृग्वङ्गिरसौ बुधः कुमारो विनिर्दिष्टः ॥६॥

चन्द्रस्याग्रे राशौ सुनभा ह्यनभा[२] त्वतीतराशिस्थे[३] ।
उभयत्र ग्रहयुक्ते धुरुधुरसंज्ञो भवेद्योगः ॥७॥

---

यदि स्त्रीराश्यंशकगते मातृष्वसा पुत्रिका वा भवति । गुरुर्मातुलश्च भवति । शुक्रो मातृष्वसा । पुरुषस्य पुरुषराश्यंशकगतास्सर्वे[1] ग्रहाः शुभं कुर्वन्ति । स्त्रीराश्यंशकस्थिताः स्त्रियः[2] शुभदा भवन्ति ॥५॥

रविश्चक्रवर्ती । चन्द्रो राजा । कुजः सेनापतिः । शनिः प्रेष्यजातिः । शुक्रः सहचरामात्यः । गुरुर्बर्हिश्चरामात्यः[3] । बुधो राजकुमारः । तेऽपि नष्टादिषु[4] ज्ञेयाः ॥६॥

चन्द्रस्थितराशेरग्रराशौ ग्रहे स्थिते सुनभा नाम योगः । चन्द्रातीतराशौ ग्रहयुते अनभा नाम योगः । चन्द्राद्[5] द्वितीयद्वादशराश्योर्ग्रहयुतयोः धुरुधुरायोगः । एते योगाः शुभग्रहवशात्[6] शुभाः । अशुभग्रहवशादशुभाः ॥७॥

---

१ 'भूमिसुतो ना' ज, ब. २ 'भास्त्यनभा त्वतो' ख. ३ 'व्यतीत' क, ज; 'ह्यतीत' प.

---

1 'थाः सर्वे शु' ग, झ, ञ. 2 'भाय भ' ख, ग, छ, ज, झ, ञ. 3 'हिरमा' ग, छ, ञ. 4 'नष्टा विनिर्दिष्टा ज्ञे' झ. 5 'चन्द्रस्य द्वि' झ. 6 'भैरेतेऽशु' क, घ, ङ. 'भैरशु' ख, च, ज.

चतुरश्रधुरुधुरगताः[१] क्रूराः शंसन्ति मरणमचिरेण ।
सौम्यैर्दृष्टा[२] रोगो नात्र प्रभवेद्[३] बलोपेतैः ॥८॥

सौम्यादृष्टः सौरो यं यं राशिं हिनस्ति चारेण ।
क्षपयति चायुस्तस्य क्रूरग्रहवीक्षितः शीघ्रम् ॥९॥

---

एषां फलम्—चतुरश्रधुरुधुरगतास्सर्वे[1] क्रूरा अचिरेण[2] कालेन मरणं कुर्वन्ति । यस्यायुः पृच्छति तस्येत्यर्थः । तेऽपि बलयुतैः शुभैः दृष्टाश्चेद् रोगशान्तिर्भवति । शुभधुरुधुरा चेद्रोगो न सम्भाव्यते । आयुषस्सन्ति । अशुभसुनभा द्रव्यहानिं नाशं पराभवं वा पूर्वार्जितस्वहानिं कुटुम्बरोगञ्च करोति । शुभा विपरीतम् । अशुभानभा रोगं व्ययम् अङ्गभङ्गं पतितत्वं वा करोति । शुभानभा दीर्घायुष्यं[3] नीरोगत्वं निर्भयत्वञ्च करोतीत्येवं विमृश्य नष्टस्य[4] लाभालाभं शुभाशुभवशाद्वदेत् । योगेषु शुभाशुभैर्मिश्रं[5] फलम् ॥८॥

सौम्यादृष्टो वा नीचशत्रुगतो वा मन्दो यस्य[6] चारवशाद् धुरुधुरः प्रवृत्तः जन्माष्टमगतो[7] भवति तस्यायुःक्षयं करोति । क्रूरग्रहवीक्षितश्चेच्छीघ्रेण । शुभैः शुभम् । एतद् गोचरफलम् । ९॥

---

१ 'रयुताः' ग, द, प. २ 'ष्टे रो' ग, ञ ट, द, प. ३ 'प्रवदेद्बलो' ज; 'प्रभवो ब' द, ध, प.

---

1 'धुराग' क, घ, ङ, च, ञ. 2 'ण अकाले म' ञ. 3 दीर्घमायु' ग, झ, ञ. 4 'ष्टद्रव्यला' च. 5 'शुभेषु विमिश्रफ' क, घ, ङ. 6 'स्य चन्द्रचार' च. 7 'मगो भ' झ.

सौरबुधभौमभार्गवगुरवश्चैकेन्द्रियादयो जीवाः ।
१
ग्रहवर्णो राशीनां तत्रस्थेनापि संव्रजति ॥१०॥

२
इति कृष्णीयशास्त्रे चतुर्थोऽध्यायः ।

## अथ पञ्चमोऽध्यायः

३
यतिमे ग्रहो विलग्नाद्राशौ स्यात्तेन राशयोऽभ्यस्याः ।
आदेश्यः फलपाकः प्रवासविनिवृत्तिषु स कालः ॥१॥

---

सौरादयः पञ्च ग्रहाः एकेन्द्रियादीनां पञ्चेन्द्रियपर्यन्तानां जीवा अधिपाः । स्पर्शरसगन्धरूपशब्देन्द्रियाणि सौरादीनामेकाधिकमिन्द्रियमुक्तम्[1] । एतद्विमृश्य द्विपदादिजीवानां वदेत् । शनिस्त्वगिन्द्रियः । बुधस्त्वग्जिह्वेन्द्रियः । भौमस्त्वग्जिह्वानासिकेन्द्रियः। शुक्रस्त्वग्जिह्वानासिकाचक्षुरिन्द्रियः । गुरुः पञ्चेन्द्रियः । ग्रहस्योक्तमिन्द्रियं भावं वर्णञ्च राशेश्च वदेत् । राशिग्रहयोरुक्तान्[2] विशेषान् संयुज्य वदेद् बलप्रधानादित्युपदेशः ॥१०॥

इति कृष्णीयव्याख्यायां चतुरसुन्दर्यां चतुर्थोऽध्यायः ।

---

ग्रहो लग्नाधिपतिः[3] । स लग्नोदितांशादारभ्य यस्मिन्[4] नवांशे स्थितः तत्काललग्नोदितांशैर्गुणित्वा अष्टोत्तरशतभागहृते अवशेषिताः क्षणदिवसाद्या भवन्ति । या संख्या[5]

---

१ 'ति ।। चतुर्थोऽध्यायः' ट. २ 'ये चतु' झ. ३ 'ग्नादंशे स्या' ण.

---

1 क्तम् । तद्वि' ख, ज. 2 'हयोर्विशेषोक्तान् संयु' ख, ग, ज, झ, ञ. 3 'स ग्नो' क, घ, ङ, च. 4 'स्मिन्नंशे' ख, ज. 5 'यावत्संख्या अवशेषिता तावत्संख्या' क, घ, ङ, च.

**दीर्घाल्पमध्यमत्वे राशीनां सूर्यभुक्तिलक्ष्यांशैः[1] [2] ।**

**ग्रहचारनष्टजातकविधिभिश्चैवादिशेत् कालम् ॥२॥ $**

अवशेषिता सा संख्या प्रवासादिषु[1] कालो भवति * । अस्यार्थमन्यत्र अन्ये आचार्या वदन्ति — यतिमे यावत्संख्ये राशौ प्रवासनिवृत्त्यादिकारको ग्रहः स्थितः तावत्या संख्यया [आत्मांशयो ? राशयो] द्वादशसंख्या अभ्यस्याः । संगुण्य तदानीं या संख्या तया परिच्छिन्ने दिने मासे वत्सरे वा प्रवासादि वक्तव्यम् । तच्च उदयराशेः स्थिरत्वे वत्सरः । उभयत्वे मासम् । चरत्वे दिनम् । ततः 'दीर्घाल्पमध्यमत्वम्' इत्यनेनोक्तम् । कारकग्रहलक्षणन्तु —

'इष्टभावादधस्थो वा लग्नगो मन्दगोऽपि वा ।
बली वा योगकर्ता वा कारकग्रह इष्यते ॥'

इत्युक्तम् । इष्टभावो निवृत्तिप्रश्ने सप्तमः । प्रवासप्रश्ने दशमः । गृहप्रवेशप्रश्ने चतुर्थः। पुत्रप्रश्ने पञ्चमः । तत्तद्भावाधिपस्तत्तद्भावादधस्थे राशौ[2] तत्तद्भावकेन्द्रराशौ वा यदि बली तर्हि स एव कारकः । भावादधस्तनराशेः भावकेन्द्रराशेर्वा अन्यत्रावस्थितस्य बलिनोऽपि न कारकत्वम् । तत्रावस्थितस्यापि दुर्बलस्य न कारकत्वम् । योगकर्ता बली चेत् स एव कारकः । तत्तद्भावसाधारणश्चन्द्रो[3] लग्नाधिपश्च, प्रवासादिकारकग्रहश्चक्रस्थितराशेरारभ्य चतुर्षु राशिषु मृगस्थे कुम्भादिराशिचतुष्टये बलचतुष्टययुते यदि पूर्वन्यायागतदिनमासाद्यारम्भ एव ॥१॥

दीर्घाल्पमध्यमत्वे चरस्थिरो [भयेत्य ? भयोदय इत्य]र्थः । चरोदये मेषादावारभ्य[4]

१ 'भुक्तोज्झिताद्यंशैः' क, घ, च, छ, झ, ट, ढ, ण, न, फ. २ 'लक्षांशैः' ब.

1 'सनिवृत्तिषु का' क, घ, ङ, च. 2 'विपतिरधस्थाने राशौ' च. 3 'भावान-माधारश्चन्द्रो' क, घ, ङ. 4 'षादार' ख, ग, ज, झ, ञ.

$ एतत्पद्यानन्तरं ग, ञ, द, ध, प पाठेषु ६, ७, ८, ९ तमपद्यानि । ततः ३, ४, ५ तमपद्यानि इति क्रमः । बरपाठयोः ३, ४, ६ तमपद्यानि न सन्ति ।

* एतदनन्तरं 'दीर्घाल्पे'त्यादि द्वितीयपद्यस्य व्याख्यानमेव ख, ग, छ, ज, झ, ञ पाठेषु आरभ्यते ।

१
अटवीक्षेत्रग्रामाम्बुगिरिग्रामापणावटारामाः ।
नद्या मुखं सरोऽर्णव इत्युद्देशास्त्वजादीनाम् ॥३॥

---

सूर्यस्थितनवांशकपर्यन्तानंशान् लग्नस्योदितांशैर्गुणित्वा अष्टोत्तरशतेन हृते अवशेषिता याः ताश्च क्षणाद्या भवन्ति । यो ग्रहः प्रश्नफलदायी तस्येत्यर्थः । प्रवासगतस्यागमनकालो भवति । स्थिरोदये यस्मिन् राशौ रविः स्थितः तद्राशेरुदितांशान् पूर्ववद् गुणित्वा पूर्ववद् भागहृतेऽवशिष्टा या संख्या स कालो भवति । उभयोदये रविस्थितांशादुपरि यावन्मीनान्तांशान् पूर्ववद् गुणित्वा पूर्ववद् भागहृते या संख्यावशिष्टा[1] स कालो भवति । एवमागमनकालपरिमाणे ज्ञाते आगमनहेतुश्चन्द्रश्चेत्तावन्तो मुहूर्ताः, क्षणाः, नाडीद्वयम् । कुजश्चेत्तावन्तो दिवसाः । शुक्रश्चेत्तावन्तोऽर्धमासाः । गुरुश्चेत्तावन्तो मासाः । बुधश्चेत्तावन्त ऋतवः । सूर्यश्चेत्तावन्त्ययनानि । शनिश्चेत्तावन्तः संवत्सरा इति । [2]सूर्ये बलयुतेऽयं क्रमः । ग्रहचारवशात्कालनियमो वा[3] वक्तव्यः । यावता कालेन फलदायी ग्रहः स्वोच्चं स्वक्षेत्रं मित्रक्षेत्रं वा प्रविशति तावता कालेनागच्छतीति वक्तव्यम् । जातकवशाद्वा कालनियमं ब्रूयात् । नष्टजातकं दृष्टजातकं वा ज्ञात्वा तस्य तस्य जन्मलग्नं वावगम्य यदि[4] तत्र शुभग्रहः प्रविशति तत्र शुभं भवतीति ब्रूयात् ॥२॥

मेषादीनामटव्यादिप्रदेशाः । लग्नराशिस्थानं चन्द्रस्थितराशिप्रदेशं छत्रराशिप्रदेशं वा बलवशाद् द्रव्यप्रोषितभोजननष्टचिन्तासु स्थानं वदेत् ॥३॥

---

१ 'मपट्टणाव' ग.

---

1 'शा का' ख, ग, ज, झ, ञ. 2 'र्येऽतिब' ख, ग, घ, ज, झ, ञ. 3 'मो वक्त' ख, घ, छ, ज, झ, ञ. 4 'दि ततः शुभः प्र' ग, ञ.

भूम्याकाशस्थानां राशीनामुपरि सन्निपातेन ।

[१]
नीचोच्चारातिसुहृद्दूरासन्नत्वमादेश्यम् ॥४॥

चङ्क्रमणासनशय्याः स्थितिरित्युदयास्तहिबुकमध्येषु ।
स्वदिगभिमुखेन कर्म ग्रहभवनैः प्राणिनां वाच्यम्* ॥५॥

---

भूमिस्थो राशिरारूढः । आकाशस्यः छत्रराशिः । तयोः संयोगाद्यदि[1] छत्रराशिरारूढराशेः[2] नीचराशिश्चेत् स प्रदेशो नीचपरिगृहीतः । उच्चराशिश्चेदुत्कृष्टपरिगृहीतः। दूरराशिश्चेद् दूरपरिगृहीतः । रिपुराशिश्चेद्रिपुपरिगृहीतः । मित्रराशिश्चेन्मित्रपरिगृहीतः । सन्निकृष्टश्चेत्सन्निकृष्टः ॥४॥

उदयराशिश्चरति । अस्तमयराशिरास्ते । चतुर्थराशिश्शेते[3] । दशमराशिस्तिष्ठति । तेषां बलयुतेन राशिना तत्रस्थेन ग्रहेण वा प्रोषितस्य दिक् च[4] कर्म च वक्तव्यम् । अनेनान्यदप्युपदिश्यते—यदि कश्चित् कस्मै प्रयोजनाय गच्छति तदा फलदायिग्रहस्य या दिक् तदभिमुखात्प्रवृत्तिरिति वक्तव्यं, तस्य कर्म च वक्तव्यम् । तदारूढद्रेक्काणस्य हस्ते यद् द्रव्यं तच्च तस्य हस्ते भवति । तदा चङ्क्रमणादियोगश्च वक्तव्यः ॥५॥

---

१ 'च्चरिपुमित्रदू' ग, ञ, द, ध, प.

---

1 'यद्यच्छत्र' ख, ज. 2 'राशेरधिपतेर्नीच' क, ङ, च. 3 'शिरासीनः' क. 4 'च ग्रहकर्म च व' ग, छ, झ, ञ.

---

* एतत्पद्यानन्तरं सप्तमाध्यायदशमपद्यादारभ्यैव नपाठः । धपाठे 'इति कृष्णीये संज्ञाध्यायः प्रथमः' इति वर्तते ।

अर्कस्थादूरगताः क्षिप्रं फलदा ग्रहास्तु बलवन्तः ।

दूरस्थाश्चिरकालाद्दीर्घादि गृहप्रमाणवशात्[१] ॥६॥

लग्नार्कचन्द्रभुक्तैर्होराभागांशकैर्यथासंख्यम् ।

वर्षं मासं दिवसं ग्रहगत्या वा वदेत्कालम् ॥७॥

---

अर्काद्द्वितीयतृतीयचतुर्थगता अदूरगताः । अन्यत्र गता दूरगताः । अदूरगता उक्तकालेन क्षिप्रं फलं दिशन्ति[1] । दूरगताश्चिरकालात् । चरराशिर्लग्नगतश्चेद्दीर्घकालेन फलप्राप्तिः । स्थिरोऽल्पकालेन । उक्तार्धकालेनेत्यर्थः । उभय उक्तकालेन भवति ॥६॥

उदयहोरापिण्डं मेषादिरविभुक्तभागपिण्डं चन्द्रभुक्तांशकपिण्डञ्च पृथक् पृथक् स्थापयित्वा लग्नहोरापिण्डम् आदित्यभागपिण्डेन गुणयेत् । आदित्यभागपिण्डं चन्द्रांशकपिण्डेन गुणयेत् । चन्द्रांशकपिण्डं लग्नहोरांशकपिण्डेन[2] गुणयेत् । पिण्डत्रयं पञ्चत्रिंशदधिकेन शतेन[3] लब्धाः संवत्सरमासदिवसाः क्रमेण भवन्ति । ग्रहगत्या वा वदेत् कालम् । एतदुक्तं भवति—फलदायी[4] ग्रह उदयलग्नं वा स्वगृहं वा स्वोच्चं वा यावत्कालेन प्रविशति तत्र फलं भवति । चन्द्रसूर्यावपि वा विमृश्य वदेत् तत्र संवत्सराद्याः। स्थिरराश्युदये लब्धं[5] चतुर्गुणं कुर्यात् । उभयराशिश्चेत् त्रिगुणीकुर्यात् । चरराशौ तदेव ग्राह्यम् । शुभाशुभफलदायी ग्रहो यस्मिन् काले प्रविष्टो निर्गतो वा भवति उभौ

---

१ 'लाद्धस्वादि प्र' ग, ञ, द, ध.

---

1 'प्रं फलन्ति' क. 2 'होरोदयपि' ख, ज. 3 'हृतेन' घ, झ, ञ. 4 'दायि ग्रहोदय' ख, ग, छ, ज, ञ. 5 'लग्नं चतु' घ.

लग्नातीताद् वृत्तः प्राप्यादेष्यो[१] विलग्नभात्प्राप्तः ।
मध्यास्त[२]हिबुकहोरान्तरगैर्वृत्तैष्यसम्प्राप्ताः ॥८॥

---

स्मर्तव्यौ । उदयस्थितग्रहश्चिन्त्यः । तस्मिन् काले फलप्राप्तिः । पुत्रलाभं पृच्छति चेत् पुत्राधिपतिर्वा पितृमातृग्रहश्च यस्मिन् काले अन्योन्यदृष्टौ वा सह गतौ वा भवतः[1] तदा पुत्रप्राप्तिः । एवं तद्भावसम्बन्धाद्भवति ॥७॥

अथातीतानागतवर्तमानफलानि कालश्चोच्यन्ते— उदयात्पूर्वोदितराशिवशादतीतफलञ्च कालञ्च वदेत् । लग्नवदारूढमुदयलग्नं कृत्वा लग्नकेन्द्रत्रिकोणगतग्रहवशात्[2] शुभाशुभफलं कालञ्च वदेत् । तस्मिन्नेव पूर्वजन्मावस्थाञ्च वदेत् । उदयाद् द्वितीयराशिना एष्यं वदेत् । सर्वमुदयेन वर्तमानमुपदिष्टम्[3] । उदयराशेरप्यतीतभागेनातीतं पश्चाद्भागेन भविष्यद्भावं वदेत् । उदितांशेनात्यासन्नफलं[4] वदेत् । तत्र यावत्कालेन शुभग्रहो वाप्यशुभग्रहो वा लग्नं प्रविष्टस्तद्दिने अतीतं शुभाशुभं वदेत् । प्रविश्यमानादप्येवं वदेत् । ग्रहैरप्येवं मध्यास्तहिबुकहोरान्तरगैरतीतानागतवर्तमानफलमुपदिष्टम् । उदयराशिं स्फुटविलग्नं[5] तन्नवमराशिं तावल्लग्नं कृत्वा तदन्तराळग्रहस्थितिवशात् शुभं वाप्यशुभं वा लाभालाभं वा ग्रहबलात्प्रष्टुर्वदेत्[6] । नवमादपरांशमारभ्य राशिचतुष्कान्तरगैर्ग्रहैर्भविष्यच्च वदेत् । पञ्चमादारभ्य लग्नानुदितराशिभागचतुष्कान्तरगैर्वर्तमानं वदेदिति ॥८॥

---

१ 'प्राप्तादेष्या' छ. २ 'लग्नास्त' छ, ज, ब.

---

1 'गता वा भवन्ति तत्पुत्र' ख, ज. 2 'गतैर्ग्रहैः शुभा' च. 3 मुद्दिष्टम्' क, घ, ङ. 4 'त्कालात्' ख, ग, ज, झ, ञ. 5 'टल' ख, छ, ज, ञ. 6 'हवशात्प्र' ख, ज,.

**विषमेषु पञ्च भागाः पञ्च तथाष्टौ च सप्त पञ्चाख्याः ।**

**भौमयमार्य[१]बुधानां भृगोश्च युग्मेषु विपरीतम् ॥३॥**

**[२]गृह[३]भागेष्ववकाशो भोजनविधिशयन[४]मैथुनेषु तथा ।**

**[५]वाच्यो वर्णो[६]त्कर्षो विप्रादीनां पुरोक्तानाम् ॥४॥**

---

कुर्यात् । एवं त्रीन्[1] राशीन् अन्योन्यगुणितानुदयलग्ने उदितत्रिंशद्भागै[2]र्हृत्वा संयोज्य उदयलग्नं लिप्तीकृत्य लग्नवर्गं कृत्वा अधिकान्न्यूनं विशोध्य भागैर्भक्त्वा लब्धं षष्ट्या विभज्य लब्धा मासा भवन्ति । तान् मासान् द्वादशभिर्हृत्वा संवत्सरो भवति । मासशिष्टं त्रिंशदादिगुणिता द्वादशहृता दिवसा भवन्ति । तथा नाडिका भवन्ति । एवमायुःपिण्डं लग्ने विषमराशौ गतं भवति । समराशौ लग्नगते आनीत[3]मायुःपिण्डं गम्यं भवति । एवं गतं वा गम्यं वा प्रष्टुरायुःपरिमाणं वदेदिति ॥२॥

अथ त्रिंशांशकविधिरुच्यते विषमेष्विति । मेषादिविषमराशिष्वादौ पञ्च भागाः कुजस्य । पुनः पञ्च भागा यमस्य । तस्मादष्ट भागाः गुरोः । ततः सप्त भागाः बुधस्य । अन्त्यपञ्चभागाः शुक्रस्य । युग्मराशिषु विपरीतम् । पूर्वं[4] पञ्च भागाः शुक्रस्य । पश्चाद्बुधस्य । पुनर्जीवस्य । ततो मन्दस्य । अन्ये[5] भौमस्येति ॥३॥

गृहेति । गृहभागेष्ववकाशः दीर्घह्रस्वसमभागे[6]षूदितेषु स्थानावकाशं वदेत् ।

---

१ 'र्भार्किगुरुबु' क, ग, घ, ङ, च, ट, ठ, ड, ढ, द, ध, न, प, फ. २ 'ग्र' क, ख, ङ, च, छ, ज, झ, ट, ड, ढ, ण, फ, म, र. ३ 'भावेष्व' ट. ४ 'मैथुनानि त' ख, घ, ङ, च, छ, ज, झ, ट, न, फ, ब; 'मैथुनानि पुनः' र. ५. 'वाच्या' ठ, द, प. ६ 'त्कर्षे' ठ, प.

---

1 'त्रिंशद्राशीन्' ग, झ. 2 'द्भागे हृ' ख, ग, छ, ज, झ. 3 'ते विमृश्य आनी' ख, ज. 4 'पुनः पञ्च भा' च. 5 'अन्ते' क; 'अन्त्ये' ख, घ, ङ, च, छ, ज. 6 'स्वभा' क, घ, ङ, च.

[1]प्रेतार्थवशादतस्करयुवतिचतुष्पाददुहितृचिन्तायाम् ।

सौरबृहस्पतिसौम्याङ्गारकभृगुसूर्यशीतकरा[2]: ॥५॥

¶पर्यङ्कस्य द्वे द्वे भवने गात्रेषु पादकेष्वेकम् ।

[3]होरान्त्याद्याः शिरसि स्थाप्याः सव्यापसव्येन ॥६॥

---

भोजनविधौ शयनविधौ मैथुनविधौ च त्रिंशांशकनाथवशात्[1] पूर्वोक्तविप्रादीनां गृहे भोजनादयः सम्भवन्तीति प्रष्टुर्वदेत्[2] । तद्यथा गुरुः स्वत्रिंशांशके शुक्रत्रिंशांशके वा स्थित्वा लग्नं पश्यति चेद् ब्राह्मणगृहे भोजनं शयनं मैथुनमपि । एवमन्येष्वपि अनुसन्धातव्यम् ॥४॥

सौरादीनां क्रमादेते भावा[3]श्चिन्त्याः, भोजनमैथुन[4]चिन्तासु ग्राह्याः । तत्र मन्दवीक्षितयुते प्रेतविषयं भोजनम् । रविणा चतुष्पदगृहे वदेत् । शशिना दुहित्रन्नं[5] मा[6]त्रन्नं वा भुक्तमिति वदेत् एवमन्यान्यप्यूह्यन्ते ॥५॥

अथ शयनशुभाशुभमाह जातस्य वान्यस्य वा—पर्यङ्कस्य द्वे द्वे । पर्यङ्कस्य गात्रेषु

---

१ 'दचोरयुवतिचतुष्पद' क, घ, ङ, च, ज, झ, ञ, ट, ड, ढ, ण, द, ध, न, प, फ, ब, र. २ 'तगवः' ग, झ, ठ, ध, प, ब, र. ३ 'न्त्याद्याः शिरसः स्थानात् स्थाप्याश्च सव्येन' ग, ठ, द, ध, प; 'न्त्याद्याः शिरसादीनि शुभः स्थाप्यः सव्यापसव्येन' घ, च; 'न्त्यादीनि शिरः स्थाप्यात् सव्यापसव्येन' छ.

---

1 'शनाथ' ग, छ, झ, ञ. 2 'त् । सौरादीनां' ग, घ, छ, झ, ञ. 3 'मात्तद्भावा' ग, झ, ञ. 4 'ननष्टचिन्ता' क, घ, ङ, च. 5 'हितॄणां मातॄणां वा भुक्तमि' क, ङ. 6 'मातुलान्नं' घ, च.

---

¶ अस्मात्पद्यात् पूर्वं "पर्यङ्कपादसन्धिषु भवने द्वे द्वे तु गात्रयोश्चापि ।
होरान्त्याद्याः शिरसोऽपसव्यसव्यक्रमात्क्रमशः ।." इति पद्यं कचपाठयोरस्ति ।

होराकेन्द्रे[1] कुर्यादिन्दुर्जळबधिरकुब्जवामनकान् ।
अजवृष[2]मिथुनकुळीरे द्वादशभे[3] वामकाणन्तु ॥७॥

दिनकृद्दक्षिणकाणं द्वादशगः[4] फणिपतौ तु केन्द्रस्थे ।
न स्युर्गुरु[5]भृगुसौ[6]म्याश्चतुष्टये वा त्रिकोणे वा ॥८॥

मृगराड्वृश्चिककन्या वृषोऽप्यपत्यालयं कदाचित्स्युः ।
चन्द्रस्थानं वा स्यादल्पापत्यो भवेत्प्रष्टा ॥९॥

---

पादेषु च पूर्वोक्तन्यायेन भूचक्रं [स्थाप्य ? स्थापयित्वा] ग्रहैः शुभाशुभं दृढादृढत्वञ्च वदेत् । चरचक्रोदयराशिं शिरसि [स्थाप्य ? स्थापयित्वा] सप्तमराशिं वक्त्रे [स्थाप्य ? स्थापयित्वा] ग्रहस्थितगात्रे जातस्य व्रणभूषणलक्ष्मकादीनि वदेत् । मैथुने नखदन्तव्रणादीनि वदेत् प्रष्टुरिति ॥६॥

उदयकेन्द्रगतश्चन्द्रः जळबधिरकुब्जवामनकान् जातान् करोति । सम्पूर्णचन्द्रो न चेत् मेषवृषमिथुनकुळीरे द्वादशभवने[1] वामकाणो भवति । तत्र चन्द्रे स्थिते निश्चयाद्वदेत् ॥७॥

जातस्य द्वादशभवनगतो रविर्दक्षिणकाणं करोति । फणिपतिः केन्द्रगतश्चेदेतल्लक्षणं शुक्रगुरुबुधाः केन्द्रत्रिकोणराशिषु न सन्ति चेत् । पूर्वोक्तलक्षणेषु बलयुताः केन्द्रत्रिकोणगताश्चेन्नेत्रकाणत्वं न सम्भवति । किञ्चिद्रोगं वदेत् । शुभस्तदपि नाशयति ॥८॥

प्रश्ने वा जातके वा मृगवृषवृश्चिककन्याः पुत्रस्थानगताः स्युरशुभयुताः प्रष्टारं पुत्रहीनं कुर्वन्ति । अथवा चन्द्रस्थाने पुत्रस्थानगते प्रष्टा अल्पापत्यो भवति । एवं मूर्त्यादिद्वादशभावाश्चिन्त्याः ॥९॥

---

१ 'केन्द्रैः कु' ख. २ 'मेषवृ' ख. ३ 'शगे' क, ग, घ. ४ 'गे फ' छ, ज.
५ 'स्युर्बुधभृगुजीवाश्चतु' ब. ६ 'रकुजसौ' ट.

---

1 'शगे वा' क, ङ.

अष्टोत्तरशतमंशं भुञ्जानश्चन्द्रमा नृणां क्रमशः ।
शुभमशुभं वा कुरुते द्वादशगणसंश्रयान्नियतम् ॥१०॥

नरजन्मराशिभागे[१] प्रश्नोत्पन्ने निशाकरोऽत्रस्थः ।
अंशाश्रयफलमखिलं तस्मै चन्द्रः प्रदाता स्यात् ॥११॥

सौम्यानामन्यतमस्तस्मिन् काले समग्रबलवीर्यः ।
स्याद्यस्य नवमराशौ तस्य भवेदिष्टधनलाभः ॥१२॥

---

अष्टोत्तरशतसंख्यानामंशानां यस्मिन्नंशे[1] चन्द्रः स्थितः तदंशं विमृश्य शुभाशुभं जीवोपायञ्च वदेत् । शुभांशे शुभम्, अशुभांशे अशुभं वदेत् । प्रथमतृतीयाद्योजांशे[2] शुभं, युग्मांशेऽशुभम्[3] । एवं द्वादशांशादपि ज्ञेयम् ॥१०॥

नरस्य जन्मराशौ यस्मिन् नवांशे चन्द्रः स्थितः प्रश्ने वा चन्द्रः स्थितः नवांशफलं तस्मै प्रष्ट्रे अंशाश्रयफलमखिलं सर्वं ददाति । चन्द्रराशिबलाद्राशिफलं वदेत् । अत्रस्थ उदयकेन्द्रगतश्चन्द्र इत्यर्थः । पुरुषस्य जन्मलग्नस्य प्रश्नलग्नस्य प्रश्नचन्द्रस्य च संवादे सत्यष्टोत्तरशतमपि फलमिति नर(जन्म)राशिरित्यनेनोक्तम् ॥११॥

प्रश्ने वा जातके वा यस्य नवमराशौ शुभानामेकः स्थितश्चेत् तस्येष्टधनलाभं करोति । चिन्तितस्य लाभो भवतीत्यर्थः । अशुभेषु विपरीतम् । तेन राशिन विधिविहितं ज्ञायते ॥१२॥

---

१ 'लग्ने' ञ.

---

1 'स्मिन्नवांशे' ग, छ, झ, ञ. 2 'यादिविषमांशे शुभं द्वितीयादियुग्मांशे' च. 3 'भम् । द्वादशगणसंश्रयादित्यनेन द्वादशांशस्यापि शुभाशुभञ्च तत्फलं नियतमिति वदेदित्यर्थः । एवं द्वा' क, ष, ड, च.

क्रूरः षष्ठे लग्नात्स्वाङ्गविभागे करोति वैकल्यम् ।
केन्द्रत्रिकोणराशिषु न स्युर्गुरुसौम्यभृगुपुत्राः ॥१३॥

क्रूरैर्निहते चन्द्रे सौम्यैरनवेक्षिते शिशुरमाता ।
दुःखेनासौ[1] जीवति राश्याकृतिजं फलं भुक्त्वा ॥१४॥

कुर्युः शुभा वियोनिं धनायकेन्द्राश्रिताः पुनर्नस्युः ।
होराविषमे सौरिः[2] करोति पुंजन्म लग्ने वा ॥१५॥

---

लग्नाद्वा आरूढाद्वा लग्नात् षष्ठभवनगतः क्रूरः स्वोक्तदेहविभागे वैकल्यं करोति । अतिक्रूरश्चेद्भङ्गं करोति, तत्र केन्द्रत्रिकोणराशिषु बलयुता गुरुसौम्यशुक्रा न स्युश्चेत् । यदि सन्ति तत्राङ्गवैकल्यं न सम्भवति ॥१३॥

क्षीणचन्द्रे क्रूरयुतवीक्षिते अरिष्टयुते षष्ठाष्टमव्ययगते सौम्यवीक्षिते मात्रा हीनः शिशुर्जीवति । लग्नं सौम्यवीक्षितं चेद्राश्युक्तफलं भुक्त्वा दुःखेन जीवति । राशिग्रहाणां फलं मूलञ्च मूलचिन्तासु वक्ष्यामि ॥१४॥

अथैवंलक्षणे वियोनिश्चिन्तितो वा जातो वा भवेत् । वियोनिः मनुष्यादन्या, पशुपक्षिसरीसृपादयः । धनायकेन्द्रादन्यत्र गताः शुभा वियोनिं कुर्युः । पापा धनायकेन्द्रगताश्चेत्तत्रापि वियोनिं वदेत् । उदयाद्वा आरूढाद्वा विषमराशिगतो मन्दः पुंजननं करोति । विपरीते स्त्रीजननम् । लग्नगतश्चेद्राशिवशाच्चिन्त्यम् । सर्वेषां ग्रहाणां बली मन्दश्चेदेवं लक्षणम् ॥१५॥

---

१ 'कृच्छ्रेणासौ' ख. २ 'रविः' ख, घ, ङ, च, छ, ज, झ, ट, न, फ, ब, र.

निधने[1] भौमो न स्याल्लग्ने चार्केण संयुते प्रश्ने ।
केन्द्रे बलवान् जीवः करोति दीर्घायुषं पुरुषम्[2] ॥१६॥

इति[3] कृष्णीयशास्त्रे[4] सप्तमोऽध्यायः ।

---

अथाष्टमोऽध्यायः

ग्रहगृहयोर्दिशमर्को ज्योतिश्चक्रे भ्रमन् यदाश्रयति[5] ।
दिवसनिशोस्सा वेळा निर्देश्या सर्वकार्येषु ॥१॥

ग्रहवीक्षणासनाभ्यां[6] राशेर्भावोऽनुवर्तते[7] ग्रहजम् ।
ग्रहवीक्षणयुतिरहितो[8] राशिः स्वं भावमाश्रयति ॥२॥

---

लग्ने अर्कयुते प्रश्ने केन्द्रे जीवयुते भौमोऽप्यनष्टमगतः पुरुषो दीर्घायुर्भवति जातस्यापि वदेत् ॥१६॥

इति कृष्णीसव्याख्यायां चतुरसुन्दर्यां सप्तमोऽध्यायः

---

अथ दिवसे निशि वा कस्यां वेळायां कार्यसिद्धिरित्यवगमनार्थमाह—ग्रहोक्तदिशं वा राश्युक्तदिशं वा ज्योतिश्चक्रे भ्रमन् सूर्यो यदाश्रयति दिवसे वा रात्रौ वा सूर्योदितांशसमनाडिका सर्वकार्येषु वक्तव्या इति ॥१॥

ग्रहवीक्षणयुतेन[1] ग्रहजभावप्रधानं राशिफलं वदेत् । ग्रहवीक्षणयुतिरहितो राशिः स्वं भावं सर्वमाश्रयतीति नष्टमुष्टिचिन्तालाभालाभेषु ग्राह्यम् ॥२॥

---

१ 'वार्केण' ख, छ, र. २ षम् । 'सप्तमोऽध्या' ट. ३ 'इति सप्त' भ. ४ 'ये सप्त' झ. ५ 'दायाति' ख. ६ 'हयोगदर्शनाभ्यां' ग. ७ 'र्भावो न वर्तते गृह' ख. ८ 'क्षासनर' ख, ग, अ, ठ, द, ध, प, ब; 'क्षायुतिर' च, झ, न, फ.

---

1 णयुतिरहितो राशिः स्वं भावं सर्वमाश्रयति । नष्टमुष्टिचिन्तालाभालाभेषु ग्राह्यः। दर्शनासनाभ्यां राशेर्भावोऽनुवर्तते ग्रहजम् । ग्रहवीक्षणासनरहितो राशिः स्वं भावमाश्रयति' ॥२॥ क, घ, ङ, च.

चन्द्रस्थानं भौमः[1] पश्यत्यात्मा भृगौ कुटुम्बं स्यात् ।

भ्राता सौम्ये चन्द्रे माता सूर्ये भवेत्पुत्रः[2] ॥३॥

भार्या गुरुणा दृष्टे दिनकरपुत्रेण जायते शत्रुः ।

आत्मादौ[3] द्वादशके क्रूरा नेष्टाश्शुभास्त्विष्टाः[4] ॥४॥

*भौमो रोगं कुरुते भोगं शुक्रो[5] नरोगतां सौम्यः ।

सौरो मरणं दिनकृन्नाशं चिरजीवनं जीवः ॥५॥



चन्द्रस्थानराशिं भौमः पश्यति चेद् आत्मचिन्तां करोति । द्रव्ये हृते[1] चोरः स्वयमेव भवति । एवमन्यैश्चन्द्रस्थानयुतवीक्षणादेवं वदेत् । शुक्रे कुटुम्बम्, बुधे भ्राता, चन्द्रे माता, सूर्ये पिता वा पुत्रो वा ग्राह्यः ॥३॥

गुरुणा भार्या पुत्रो वा । दिनकरपुत्रेण शत्रुरिति । आत्मादिद्वादशभावेषु क्रूरग्रहा रोगमरणव्ययानि कुर्वन्ति । सौम्याः सुखप्रमोदलाभान् कुर्वन्ति ॥४॥

तत्कथमिति चेत्, भौमादयो रोगादीन् कुर्वन्ति ॥५॥

---

१ 'भौमे प' क to ङ, छ to ञ, ठ to ण, द to प. २ 'र्ये पितायवा पुत्रः' ञ. ३ 'त्मादिद्व दशभे' ख. ४ 'भाश्शिष्टाः' ञ. ५ 'शुक्रस्त्वरोगतां' ख, ज, न.

---

1 'द्रव्याहृते' ख, छ, ज, झ ञ.

---

* पद्यमिदं छपाठे नास्ति । रपाठे पद्यमिदं सप्तमपद्यानन्तरं लिखितं दृश्यते ।

भूयिष्ठं मेषादौ मेषादावागते तदात्मा स्यात् ।
वृषभादावायाते धनाद्यमित्येवमादेश्यम् ॥६॥

धनभावेनायातेऽरिग्रहभवनेऽरिणा[1] धनं नश्येत् ।
भ्रातृपितृमातृपुत्राङ्गनादिभिस्त[2]द्विरोधः[3] स्यात् ॥७॥

इति कृष्णीयशास्त्रे[4]ऽष्टमो[5]ऽध्यायः[6] ।

---

अथ नवमोऽध्यायः

चन्द्रारोरगसौरैर्धातुर्मूलं किलार्कशुक्राभ्याम् ।
जीवो जीवबुधाभ्यां मेष शिवन्यादि धात्वादि[7] ॥१॥

---

भूयिष्ठं मेषादौ आरूढगते उदयगते वा तत्तदादिभावाश्चिन्त्याः फलञ्चादेश्यम् ॥६॥

धनस्थाने अरिग्रहे वा अरिग्रहराशौ वा प्राप्ते शत्रुणा धनं नश्येत् । ग्रहेणापि वदेत् । सूर्यः शत्रुक्षेत्रगतश्चेत् पितृविरोधः सम्भवेत् । द्वादशभावेषु यत्र स्थितः तद्भावं नाशयति । बन्धुस्थानगतो लाभगतश्चेत् प्रचुरं लाभं करोति । एवमन्येषामपि वदेत् ॥७॥

इति कृष्णीयव्याख्यायां चतुरसुन्दर्यां अष्टमोऽध्यायः

---

अनेन ग्रहाणां धातुमूलजीवभावमाह । केन्द्रत्रिकोणगताश्चन्द्रशनिकुजनागा धातुचिन्ताकराः । अर्कशुक्रौ मूलचिन्ताकरौ । जीवबुधौ जीवचिन्ताकरौ ।

---

१ 'णा विनश्यं तत्' ख, ग, घ, च, झ, ञ, ड, ढ, ध, फ, ब, र.
२ 'भिस्ते विरुध्यन्ति' ख, ब, र. ३ 'स्यात् । द्वितीयोऽध्यायस्समाप्तः' घ.
४ 'इत्यष्टमोऽध्यायः' ट. ५ 'ये नष्टजातकाध्यायो द्वितीयः' ठ. ६ 'स्त्रे नष्टजातकाध्यायो द्वितीयः' ग, ज. ७ 'त्वादिः ब, र. 'त्वाद्याः' ग, छ, ज, झ, ट, ठ, प, फ, ब.

क्षणदिवसपक्षमासर्त्वयनाब्दानां नवांशकैर्वाच्यः ।
शशिभौमशुक्रसुरगुरुबुधरविसौरैः क्रमाद्भुक्तैः ॥९॥

इति[१] कृष्णीयशास्त्रे[२] पञ्चमोऽध्यायः ।

---

अथ षष्ठोऽध्यायः

प्रष्ट्रारूढं राशिं ये वीक्षन्ते ग्रहा बलोपेताः ।
तेषां क्षेत्रं प्रष्टुर्जन्मर्क्षं निर्दिशेन्मतिमान् ॥१॥

---

एते कालाः—सूर्यस्य अयनम् । चन्द्रस्य क्षणः । भौमस्य दिनम् । बुधस्य ऋतुः । जीवस्य मासः । शुक्रस्य अर्धमासः । शनेर्वर्षः । एवं कालो वाच्यः । यो ग्रहः प्रश्नफलदः सोऽपि स्थितराशौ यस्मिन्नवांशके स्थितः तन्नवांशकतुल्यसंख्यानि अयनादीनि ग्राह्याणीत्यर्थः । चिरकालाल्लब्धश्चेत् मेषाद्यंशकानि[1] गण्यानि । अथवा उक्तमेव कालं वदेत्[2] ॥९॥

अथ नष्टजातकमाह—प्रष्टा ज्ञातमज्ञातं वा स्वजन्मराशिं पृच्छति चेत् तस्य जन्मराशिं नक्षत्रं लग्नमतीतकालं च वदेत् । तेषां ज्ञानार्थमाह— प्रष्टा आचार्याद् यस्मिन् राशौ स्थितः तमारूढराशिं ये ग्रहा वीक्षन्ते तेषां बलयुतस्य क्षेत्रं तव जन्मर्क्षमिति वदेत् मतिमान् । ग्रहाणां बलाबलं निरूप्येत्यर्थः ॥१॥

---

१ 'इति प्रथमोऽध्यायस्समाप्तः' ब; 'इति प्रथमोऽध्यायः' च, न; 'इति प्रथमाध्यायो मिश्रकः' छ, म; 'इति कृष्णीये पञ्चमोऽध्यायः' झ, फ. 'इति मिश्रकाध्यायः पञ्चमः' ण. 'इति प्रथमाध्यायो मिश्रणः' भ. २ 'संज्ञाध्यायः प्रथमः' ग, द, प. 'चतुर्थोऽध्या' ब; 'तृतीयोऽध्या' र.

---

1 'काद् ग' ब, ग, छ, ज, झ, ञ. 2 'त् । इति चतुरसुन्दर्याख्यायां कृष्णीयव्याख्यायां प्रथमोऽध्यायो मिश्रकः' ज.

ग्रहवीक्षणनिर्मुक्तं केन्द्रं बलवत्तमं भवेज्जन्म ।
विषमे पुरुषगृहे वा स्थित्वारेणेक्षिते मेषः ॥२॥

युग्मे स्त्रीराशौ वा स्थित्वा यदि लग्नमीक्षते भौमः ।
जन्माष्टमराशिः स्याच्छेषैरपि चैवम्[१] (ह्यन्ते ? ह्येते) ॥३॥

पुरुषगृहं[२] वारूढं पुरुषगृहस्था[३] ग्रहा निरीक्षन्ते ।
तज्जन्म पुरुषराशौ विपरीते स्त्रीगृहे वाच्यम् ॥४॥

स्त्रीग्रहभवने[४] स्व्यर्क्षं पुरुषगृहे वापि भवति पुंराशिः[५] ।
विषमे शशिनि नरर्क्षं स्त्रीराशिर्युग्मराशिगते ॥५॥

---

ग्रहवीक्षणरहितमारूढकेन्द्रगं बलयुतं भवेज्जन्म । तत्रारूढादविषमराशौ वा पुरुषगृहे[1] वा स्थित्वा भौमो लग्नमीक्षते मेषो जन्म । युग्मराशौ वा स्त्रीराशौ वा स्थित्वा यदि लग्नमीक्षते वृश्चिको भवेत् । आरूढोक्तं लग्नस्य भवतीत्यर्थः । शेषैः सर्वग्रहैरेवं विज्ञायते । आरूढलग्नाभ्यां जन्मलग्नौ विज्ञायेते ॥२॥

अस्यार्थ उक्तः । द्विभवनग्रहस्य भौमस्योक्तवद्भवति । एकभवनयोश्चन्द्रादित्ययोरंशकविकल्पो विज्ञायते ॥३॥

उक्तलक्षणबलाभावे अनेन लक्षणेन कथयेत् । पुरुषराशिमारूढं[2] पुरुषराशौ स्थिता बहवो ग्रहा वीक्षन्ते तत्र पुरुषराशौ जन्म । स्त्र राशिगता वीक्षन्ते चेत् स्त्रीराशौ जन्म । ४॥

स्त्रीग्रहभवने[3] उदितदृष्टे स्त्रीराशिः । पुरुषग्रहभवने उदिते दृष्टे पुरुषराशिः ।

---

१ 'पि निर्दिशेदेवम्' ग, ङ, ट, द, ध; 'पि निर्दिशेन्मतिमान्' ठ, प. २ 'नरगृहसंस्था ग्र ज्ञ. ३ 'स्यास्त्वयो न' र. ४ 'पुरुषभयोगेन भ' ग, ठ, द ध, प. ५ 'ति नरराशिः' ग, ट ठ, द, प.

---

1 'षे ज'क, घ, ङ, च. 2 'षगृहमा' च. 3 'ते स्त्रीरा'क ग, घ, ङ,च, छ, झ, ञ.

यावन्तोऽत्रासीनाः प्राश्निकसहिताः[1] प्रवक्तृयुक्ताश्च ।
सर्वे त्रिगुणापन्ना भगणविशुद्धास्ततो जन्म ॥६॥

जन्मर्क्षस्य प्रश्ने राशिग्रहजातिदर्शनश्रवणैः ।
कूर्मविभागैर्वापि ब्रूयाद्भागांशकैर्वर्क्षम्[2] ॥७॥

---

सम्पूर्णचन्द्रे पुरुषराशिस्थिते पुरुषराशिर्ग्राह्यः । स्त्रीराशिस्थिते स्त्रीराशिः ॥५॥

एवं जन्मलग्ने निश्चयाद् ज्ञाते नक्षत्रनिश्चयायाह—यावन्त इति[1]। यावन्तोऽत्र प्रश्नकाले आसीनास्ते प्राश्निकप्रवक्तृयुक्तास्सर्वे त्रिगुणापन्नाः[2] सप्तविंशतिशुद्धाः, शिष्टं नक्षत्रं भवति । चरराश्युदये अश्विन्यादि, स्थिरराशौ मघादि, उभयराशौ मूलादि गणयेत् ॥६॥

अयमपरो जन्मराशिनिर्देशः—राशिवशाद्वा ग्रहवशाद्वा जातिदर्शनाद्वा प्रश्नकाल-श्रवणेन वा जन्मराशिं निश्चयाद्वदेत् । पूर्वोक्तलक्षणैस्संयुज्य तदनुरूपं वदेत् । ततो नक्षत्रं च वदेत् । कूर्मचक्रविभागैर्वा वदेत् । शास्त्रान्तरादवगन्तव्यम् । उदितत्रिंशद्भागैर्वा नक्षत्रं वदेत् । चरस्थिरोभयात्मकेषु राशिषु क्रमेण नवांशका उदीयमाना अश्विन्यादि-सप्तविंशतिनक्षत्राणि कुर्वन्ति । पूर्ववदश्विमघामूलादि ॥७॥

---

१ 'पृच्छकस' ग, ठ, द, ध, प. २ 'केन्द्रर्क्षं' ख, ठ, द, प.

---

1 'ति । पूर्ववत् स्त्रीपुरुषविकल्पनक्षत्राणामपि च वक्तव्यम् । यावन्तोऽत्र' ख, ज; 'ति । पूर्ववज्जन्मस्त्रीपुरुषविकल्पं नक्षत्राणामपि वक्तव्यम् । यावन्तोऽत्र' ग, छ, झ, ञ. 2 'गुणितास्सप्त' ख, ग, छ, ज, झ, ञ.

वाच्यं द्वादशभागैराद्ये भागे तदेव जन्म स्यात् ।

भवति द्वितीयभागे द्वितीयराशिस्तथा नेयः[1] * ॥८॥

यतिम उदेति नवांशस्ततिमेंशे जन्म निर्दिशेत्प्रष्टुः ।

पृच्छकजन्मर्क्षवशात्तस्य कुलस्यापि जन्म वाच्यं हि[2] ॥९॥

$ पञ्चमचतुर्थसप्तमतृतीयनवमानि षष्ठसहितानि ।

सुतमातृदारसोदरपितृशत्रूणाञ्च[3] जन्म वदेत् ॥१०॥

---

अथ द्वादशभागैर्लग्ननिश्चयार्थमाह—वाच्यमिति । लग्ने प्रथमद्वादशांशे उदिते लग्नराशिर्लग्नम् । द्वितीयांशे द्वितीयराशिः ॥८॥

अत्र लग्ने निश्चिते लग्ननवांशक उच्यते—लग्ने यतिमो नवांश उदीयमानः क्रमाद् गणनया ततिमेंशके जात इति । पृच्छकजन्मराशिवशात्तस्य कुलजातानां जन्मानि वाच्यानि ॥९॥

कथमिति चेत् पृच्छकस्य राशिमवधिं कृत्वा पत्पञ्चमादयः सुतादीनां जन्मराशयो भवन्ति । यदि पुत्रस्य जन्मर्क्षं पृच्छति चेत् तञ्चमराशिमारूढं कृत्वा उक्तलक्षणैर्जन्म वदेत् । एवं शेषाणामपि वदेदित्येके । कृष्णाचार्यस्तु लग्नोदितनवांशकैः पञ्चमादिभानां मयूखान् पृथक् पृथक् सङ्गुण्य सप्तविंशतिभिर्हृते शेषं पुत्रादीनां नक्षत्रं व [देत् ? दति] ॥१०॥

---

१ 'ज्ञयः' क, झ,ञ, ट, ठ, ड, ढ, ण, र. २ 'स्यादथ कुलस्य जन्मापि वच्यं हि' ग, ठ, द, ध, प. ३ 'रसहजपि' क, घ, ङ, च, छ, ज, झ, ड, ढ, ण, द, ध प.

---

*इत अनन्तरं ग ठ द ध पाठेषु 'उद्यद्द्रेष्काणतः सूर्यो यावत्संख्ये दृगाणके । तस्मा-त्तावद्दृगाणे स्याल्लग्नमित्युदितं बुधैः ॥' इति किञ्चित् पद्यमधिकं दृश्यते ॥

$ पद्यमिदं वरपाठयोर्नास्ति ।

१
भौमभृगुसौम्यचन्द्रा रविगुरुसौरोरगास्तु दिवसानाम् ।
एकादीनां पतयो मेषाद्या राशयोऽप्येवम् ॥११॥

तिथयस्समविषमाः स्युर्यस्यां तिथ्यां गतोऽश्विनीं सूर्यः ।
विषमे स्थितेन शशिना विषमो युग्मे समो दिवसः ॥१२॥

पुरुषालयग्रहाणां ज्योत्स्नापक्षोऽथ योषितामपरः ।
मेषादीनां मासा वैशाखाद्याः क्रमेणोक्ताः ॥१३॥

---

तिथिजन्मप्रहरज्ञानार्थमाह—तत्र जन्मतिथिज्ञानं क्रियते । कुजादीनामष्टानां प्रतिपदादयोऽष्टौ तिथयः । पुनरपि कुजादीनां नवम्यादयः । राहोरप्यमावास्या । तेषां कुजादीनां मेषाद्या राशयः । राहोः कुम्भः । येन ग्रहेण निमित्तभूतेन जन्मराशिनिश्चयः कृतः तथैव तस्य तिथिर्जन्मतिथिरिति ज्ञातव्या ॥११॥

तिथिद्वये संयुक्ते विशेषादेकतिथिनिश्चयार्थमाह—तिथय इति । यदि युग्मतिथिषु रवेर्मेषसङ्क्रमश्चेत्[1] तदा नवम्यादयो ग्राह्याः कुजादीनां यथासंख्यम् । यद्योजतिथिषु तदा प्रतिपदादयः । एवं यथाक्रमं पुनः पुनः मेषप्राप्तिवशाज्ज्ञेयम् । अथ सम्पूर्णचन्द्रवशान्निर्णयः क्रियते । प्रश्नकाले ओजतिथिषु चन्द्रः तदा प्रतिपदादयः । युग्मतिथिषु नवम्यादयः । एवं तिथिनिश्चये कृते जन्मप्रहरनिश्चयः कथ्यते—कुजादीनामष्टानामष्टौ यामाः । यो ग्रहो निमित्तभूतो जन्मराशिनिश्चये तस्य प्रहरो जन्मप्रहर इति वक्तव्यम् ॥१२॥

अथ[2] पूर्वपक्षापरपक्षनिर्णयायाह—पुरुषग्रहदर्शने पुरुषराश्युदये पूर्वपक्षः । स्त्रीग्रहदर्शने स्त्रीराश्युदये अपरपक्षः । प्रश्नकाले मेषादिराशिषु लग्नगतेषु यथासं वैशाखाद्या मासा जन्मनि भवन्ति ॥१३॥

---

१ 'कुजभृगुबुधशशिदिनकृद्गुरुसूर्यसुतोरगास्तु दिवसानाम् ।' ए' ब, प.

---

1 'षु मेषसङ्क्रमश्चेत्प्रतिपदादयः' च. 2 'र्णय उच्यते' क, घ, ङ, च; 'र्णय ाह' ज.

*आरूढमात्मनो वा ग्रहा विलग्नञ्च ते पुनः कार्याः ।
नक्षत्रमूह्यमेवन्त्वथवा श्रेयान् परः कल्पः[1] ॥१४॥

यमशुक्रभूमितनयाश्शशाङ्कचन्द्रात्मजामराचार्याः ।
शिशिरादीनां पतयो द्रेक्काणाश्चैवमेतेषाम्† ॥१५॥

अन्यतमग्रहराशिन्त्वयनवशाच्चरति[2] रविरतोऽन्यस्मिन् ।
तस्यर्तुरसौ ज्ञेयो ग्रहस्य मासाः क्रमेणोक्ताः ॥१६॥

---

अयमपरो नष्टजातकविधिः । यदि कश्चिज्जातकं पृच्छति पृच्छकं दैवज्ञमात्मानं पृच्छकं कृत्वा आत्मन आरूढराशिं यो ग्रहो वीक्षते तस्य राशिः पृच्छकस्य जन्मराशिः । यदि गुरुर्वातिगुणी वा पृच्छति चेदेवं विधिः । एवं लग्नं चिन्त्यम् । एवं कूर्मचक्रविभागज्ञानेन यन्नक्षत्रं श्रेयस्तदेव नक्षत्रं भवति । यस्मिन् राशौ नक्षत्रे वा बहूनि लक्षणानि सन्ति तदेव ग्राह्यम् ॥१४॥

मासे ज्ञाते ऋतुनिश्चयः । माघफाल्गुनौ शिशिरं कृत्वा शनैश्चरादीनां षण्णां षड्ऋतवः । शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ता ऋतवः । ग्रीष्म एव सूर्यस्यापि । तत्र तेषां द्रेक्काणोदयेषु तेषामुदयेषु च शिशिरादयो ज्ञातव्याः ॥१५॥

अन्येति । यस्मिन् द्रेक्काणे सूर्यस्तिष्ठति तद्द्रेक्काणाधिपतिवशाद् ऋतुर्ज्ञातव्यः । ऋतुस्थितविकल्पश्चायम् । द्रेक्काणाधिपतिः सूर्यं पश्यति चेदयं क्रमः । अन्यथा पूर्वोक्त एव ॥१६॥

---

१ 'ल्प्यः' ख, ग, छ, ज, झ, ड, र. २ 'शिवशादयनऋतौ चरति रविं' छ, त.

---

* ढपाठे एतत्पद्यं नास्ति । † एतत्पद्यानन्तरं ग, ट, द, ध, प पाठेषु 'पूर्वविभागे०' इति १७ तमपद्यं ततः 'अन्यतम०' इति १६ तमपद्यं च लिखितं दृश्यते । पद्यमिदं ठपाठे 'पूर्वविभागे०' इति १७ तमपद्यानन्तरं लिखितं दृश्यते ।

$ पूर्वविभागे राशेरुदगयनं दक्षिणं ततः शेषे ।
द्रेक्काणपूर्वभागे मासः पूर्वः परोऽन्यस्मिन् ॥१७॥

दिनबलराशिविलग्ने ग्रहे तु पृच्छेन्नरः स निशि जातः ।
निशि बलिनि[१] दिने जातस्त्रिकोणकक्ष्यां गते चन्द्रे ॥१८॥

नवमो राशौ रात्रौ दिवसे जातस्य पञ्चमो राशिः ।
द्रेक्काणो वा[२] यतिमो लग्नात्ततिमे[३] भवेज्जन्म ॥१९॥

---

अयननिश्चय उच्यते - पूर्व इति । ओजराशिषु प्रथमहोरोदये उत्तरायणम् । युग्मराशिषु प्रथमहोरोदये दक्षिणायनम् । व्यत्यये चायनस्यापि व्यत्यासः । उदितद्रेक्काणं द्विधा कृत्वा प्रथमभागे प्रथममासः द्वितीये द्वितीयः । तञ्च त्रिंशद्भागं कृत्वा तिथिविभागो ज्ञातव्यः । रविवशादृतुज्ञाने रविस्थितद्रेक्काणा[1]नुरूपं तिथिर्ज्ञेया ॥१७॥

ऋतुमासायनानामन्यथात्वे तदनुरूपो व्यत्यास उच्यते—दिनेति । दिवा जातो निशि जातो वेति संशये कुम्भादिषु षट्सु राशिषु निशाबलेषु निशिबलग्रहदर्शने च दिवा जातः । सिंहादिदिनबलराशिषूदयत्सु दिनबलग्रहदर्शने च विपरीतं, रात्रौ जातः । बलवशान्निर्णयः । लग्नात् पञ्चमे चन्द्रे बलयुते दिवा जातः, नवमे निशि जातः ॥१८॥

यदि नवमो राशिर्निशिबलश्चेद्* बलयुत एव दिवा जातः । पञ्चमो राशिर्दिवाबलश्चेन्निशि जन्म । विपरीते विपरीतम्[2] । अथ द्रेक्काणनिश्चयः—लग्ने प्रथमे यो द्रेक्काण उदेति प्रथमादितः तस्मिन् द्रेक्काणोदये जन्म ॥१९॥

---

१ 'निगृह्' ख, झ. २ 'णो यावतिमो' ख, ब, र. ३ 'मा' ख.

---

1 'णानुपातात् तिथिज्ञः' ग, झ. 2 'यमाह' क.

---

$ झपाठे पद्यमिदं नास्ति ।

* इतोऽनन्तरं अपाठे किञ्चिल्लुप्तम् — २० तम पद्यव्याख्यायां 'कालस्फुटम्' इत्यारभ्यैवास्ति ।

*प्रष्टुर्वयःप्रमाणं ज्ञात्वा प्रतिलोममानयेच्चारैः ।

आसन् ग्रहाः प्रसूतौ ततः परं करणमायोज्यम्[1] ।[2]।[3]२०।।

इति कृष्णीयशास्त्रे[4] षष्ठोऽध्यायः

---

अथ सप्तमोऽध्यायः

$ होरांशद्रेक्काणा भागघ्ना लग्नवर्गविवरौजे ।

मूलान्तरान्तरूना[5] मासा द्विगुणास्तु तेऽतीताः ।।१।।

होरांशद्रेक्काणा भागघ्ना लग्नवर्गणा च तयोः ।

विवरो[6] मासादि स्यादोजेऽतीतं युजि त्वेष्यम् ।।२।।

---

पूर्वोक्तकालैर्वा शास्त्रान्तरमुपलभ्य वा प्रष्टुर्वयःप्रमाणं ज्ञात्वा प्रतिलोमं गणयेत् । प्रतिलोमं विपरीतम् । उक्तनक्षत्रतिथिलग्ने जन्मनिश्चयं कृत्वा ततः सर्वग्रहाणां तत्कालस्फुटं कृत्वा जातकं गणयेदित्यर्थः ।।२०।।

इति कृष्णीयव्याख्यायां चतुरसुन्दर्यां षष्ठोऽध्यायः ।

---

प्रष्टुर्वयःप्रमाणं ज्ञात्वा क्वचिद्विन्यस्य तदा लग्नलिप्ताः द्विगुणीकृत्य वयःप्रमाणेन गुणयित्वा महत्यल्पं विशोध्य शिष्टा मासा भवन्ति। द्विगुणिताः प्रश्नराशौ विषमे गतमासाः । समे राशौ आगामिमासाः । ते द्वादशहृता वर्षा भवन्ति । त्रिंशद्गुणिता दिवसा इति ।।१।।

उदयलग्नं त्रिधा कृत्वा एकं भागीकुर्यात्[I] । अपरमंशं कुर्यात् । अपरं द्रेक्काणं

---

१ 'ततस्तु तत्करणमायोज्यम्' ख. २ 'मालोच्यम्' ग, ठ, द, ध, प. ३ 'ज्यम् षष्ठोऽध्यायः' ट. ४ 'ये षष्ठोऽध्यायः' झ, फ. ५ 'न्तलूना' क, ण, ब. ६ 'वरे' ख, ब.

---

1 'मंशकं कु,' ख, ग, ज, झ

---

*इदं पद्य बरपाठयो र्नास्ति । $ इदं पद्यं ग to ज, ट to ढ, द to फ पाठेषु नास्ति ।

आग्नेयद्रेक्काणा ह्याग्नेयक्षेत्रमाश्रिता ये स्युः ।
आग्नेयग्रहदृष्टाः कुर्युर्धातूद्भवां चिन्ताम् ॥३॥
मूलांशद्रेक्काणा मूलानां क्षेत्रमाश्रिता ये स्युः ।
मूलग्रहसन्दृष्टाः कुर्युर्मूलोद्भवां चिन्ताम् ॥४॥
*जीवांशद्रेक्काणा जीवानां क्षेत्रमाश्रिता ये स्युः ।
जीवग्रहसन्दृष्टाः कुर्युर्जीवोद्भवां चिन्ताम् ॥५॥

---

मेषादिचरस्थिरोभया धातुमूलजीवाः । अश्विन्यादिषु नक्षत्रेषु क्रमाद्धातुमूलजीवा ज्ञेयाः[1] ॥१॥

धातुग्रहो मूलग्रहो जीवग्रहो वा स्वांशस्वद्रेक्काणस्वभवनगतो वा दृष्टो वा भवेत् कर्तुः स्वस्य तद्भवति । परवर्गस्थे ग्रहे वा परस्य भावश्चिन्तितः । तत्र जीवग्रहः परवर्गस्थोऽप्यन्यवर्गजीवचिन्तां करोति । मूलग्रहे परवर्गस्थे परवर्गगतं मूलमस्वस्थमिति वदेत् ॥२॥

ये क्रूरग्रहद्रेक्काणाः क्रूरराशिगता ग्रहाश्च क्रूरयुतदृष्टाश्च लोहभाण्डचिन्ताकरा द्रेक्काणा[2] धातुचिन्तां कुर्युः ॥३॥

मूलराश्यंशद्रेक्काणा मूलफलधारिणश्च मूलराशिस्थिता ग्रहाश्च मूलग्रहयुतदृष्टाश्च द्रेक्काणा मूलचिन्तां कुर्युः ॥४॥

जीवग्रहांशद्रेक्काणाश्च जीवग्रहक्षेत्रमाश्रिता द्रेक्काणा जीवग्रहदृष्टयुता राशिद्रेक्काणा अपि जीवचिन्तां कुर्युः । राश्यंशकग्रहद्रेक्काणानां बलाधिकेन धातुमूलजीवविकल्पो विज्ञायते । तदुच्यते—प्रश्नकाले यद् दृष्टं यच्छ्रुतं प्रष्ट्रा यत् स्पृष्टं यच्छकुनकृतं तत्तद्भावश्चिन्तासु वक्तव्योऽत्र ।

---

1 'नेयाः' ख, ग, ज, झ, ञ. 2 'णा मूलफलग्रा' ञ.

---

* पद्यमिदं ङठदनपाठेषु नास्ति ।

यस्य ग्रहस्य लग्नं तस्मादारभ्य योनिपर्यायः ।

यावत्[1]प्रवर्ततेऽसौ ग्रहस्तु तत्र[2] स्थितो भवति ।।६।।

अंशा ये नवसंज्ञा विषमे[3] स्युर्धातुमूलजीवकराः[*] ।

जीवाद्यास्समसंख्ये चन्द्रे लग्नादिकेऽप्येवम्[4] ।।७।।

---

ननु ग्रहस्थितराश्यंशकभेदात् कथं योनिर्विज्ञायतेत दुच्यते—धातुमूलजीवा एकैकशस्त्रिविधा भवन्ति । केवलधातुश्च धातुमूलश्च धातुजीवश्च [सोऽपि] त्रिविधो भवति । केवलमूलश्च मूलजीवश्च मूलधातुश्च तदपि त्रिविधं भवति । केवलजीवश्च जीवधातुश्च जीवमूलश्च सोऽपि त्रिविधो भवति । ते नवधा भवन्ति । धातुमुक्तन्यायेन वदेत् । तत्र धातुग्रहो मूलराशिगतश्चेद् धातुर्निर्मि [तं ? तो] वृ [क्षं ? क्षो] वा फलं वा वल्ली वा कुसुमं वा भवति । अथ धातुग्रहे जीवराशिस्थिते धातुरचितं जीवं[1] भवति । जीवविशेषं जीवचिन्तासु वक्ष्यामि । तत्र यदि मूलग्रहो[2] मूलराशिगतः शुद्धमूलं करोति । यदि मूलग्रहे धातुराशिस्थिते दग्धमूलं फलं भस्म कर्पूरं हिङ्गु च वा मूलधातुर्भवति । मूलपे जीवयुक्ते मूलजीवार्थकृतं फलमूलसस्यम् । जीवग्रहे जीवराशिगते शुद्धजीवो भवति । जीवग्रहे धातुराशिगते जीवधातुः—श्रोत्रमलं नेत्रमलं मूत्रपुरीषश्च मांसरुधिरश्च रोमनखश्च देहोद्भवं सर्वं भवति । जीवमूलं जीवमेव मूलम् भवति । यन्मञ्चुळिका च वृक्षरजन्यादि ज्ञेयम् । अहो जीवयुक्तप्राणी स्वदेहमूलो दृश्यते ।।५।।

एतयोरर्थं पुनर्वक्ष्यामि ।।६, ७।।

---

१ 'तावत्प्र' ङ, द, प. २ 'यत्र' ट, ठ, द, प. ३ 'षमाः स्यु' ब, र.
४ 'धिपेऽप्येवम्' क, ग, ङ, ठ, ढ, ध, ब, र.

---

1 'जीवितं' क, घ, ङ, च. 2 'हे मूलराशिगते' क, घ, ङ, च.

---

* इतः परं नपाठे षोडशपद्यान्तं नास्ति ।

ताम्रेष्टकाकपालप्रवाळमृद्धूळयो धराजस्य ।

शशिकान्तलवणशङ्ख[1]स्फाटिककांस्यत्रपूणीन्दोः ॥८॥

रक्त[2]मणिकनक[3]काचाहरितालमनशिशलाश्च देवगुरोः ।

[4]वैक्रान्तिकमणिमरतकमृत्स्नाकाचा बुधस्योक्ताः * ॥९॥

रजतस्फाटिमुक्ता वैडूर्यञ्चापि दैत्यपूज्यस्य ।

सौरस्याञ्जन[5]लोहे नीलं सोसं तथैव राहोश्च ॥१०॥

पाषाणसूर्यकान्तारकूटवैडूर्यसीसकानि रवेः ।

क्रूरे[6]क्षणेन धाम्याः सौम्यग्रहवीक्षणेऽधाम्याः ॥११॥

---



कुजस्योक्ताः षड् धातवः । उदितराशौ पञ्चपञ्चांशेषूदितेषु एकमेकं क्रमाद्वदेत् । एवं चन्द्रस्यापि वदेत् ॥८॥

जीवस्योक्तान् पञ्च धातून् लग्ने षट् षड्भागेषूदितेषु एकमेकं क्रमाद्वदेत् ॥९॥

शुक्रस्योदितराशिं चतुर्भागं कृत्वा रजतादीन् क्रमाद्वदेत् । सौरस्यापि शुक्रवच्चतुर्भागं कृत्वा अञ्जनादीन् वदेत् । सौरस्योक्तान् धातून् राहोश्चापि वदेत् ॥१०॥

सूर्यस्य पाषाणसूर्यकान्तादयः षड् धातवः । तानुदितराशौ पञ्चपञ्चभागेषूदितेषु क्रमाद्वदेत् । तत्र फलदो ग्रहः क्रूरवीक्षितश्चेद् दग्धा वाशोधिता वा धातवो भवन्ति ।

---

१ 'ङ्खकपर्दकांस्य' द, ध, प. २ 'णिस्सौवर्ण मनशिशला काचतालमिन्द्रगुरोः' ब, फ. ३ 'चा मनशिशला तालमपि च देवगु' ग, च, ठ, द. ४ 'वैकारिकम' क, ख, ङ, ण; 'वैकृतम' ग, छ, ज, झ, फ, ब, र. ५ 'लोहेन्द्रनीलसीसान्यहेश्चापि' ग, ठ, द, ध, प. ६ 'रेक्षितेन' ख, ब, र.

---

* घचगठघ्योरेतत्पद्यानन्तरं—

'रक्तमणिः सौवर्णमनशिशलाकाचतालमिन्द्रगुरोः ।

वैकृतमणिमरतकमृत्स्नाकाचा बुधस्योक्ताः ॥'

इति पद्यमधिकं दृश्यते ।

सौम्यवीक्षणेऽदग्धा भवन्ति । केन्द्रत्रिकोणगतैर्ग्रहैरधिकबलयुतग्रहवशादुक्तान् धातून् नवरत्नानि च वदेत् । मिश्रग्रहवीक्षिते मिश्रं वदेत् । उदितद्रेक्काणे बलयुते द्रेक्काणाधिपतेरुक्तं द्रव्यं वदेत् । प्रष्टा यद्यत् प्रश्ने पृच्छति तत्तद्भावदर्शिते दृष्टे तत्तदस्तीति वदेत् । सम्भवतीत्यर्थः ॥११॥

*यस्य धातुमूलविकल्पकस्य ग्रहस्य उदयो वर्तते तस्मादारभ्य योनिपर्यायश्चिन्त्यः । उदयगतो ग्रहो यावत् प्रवर्तते तत्र स्थितांशद्रेक्काणयोनिर्विज्ञायते । केन्द्रत्रिकोणगतैरप्येवमेव वदेदित्यर्थः । अथवा लग्नाधिपतिस्थितद्रेक्काणसमयोनिं वा वदेत् ॥६॥

ये नवांशका उक्तास्ते विषमराशौ सर्वत्र आद्यांशादारभ्य धातुमूलजीवचिन्तां कुर्वन्ति । तेऽपि समराशौ उत्क्रमाज्ञेयाः । चन्द्रस्थितनवांशेन लग्नोदितेन वा प्रष्टुश्चिन्तितं वदेत् । आदिशब्देन अतिबलयुतग्रहश्च चिन्त्यः£ ॥७॥

---

* पूर्वं 'पुनर्वक्ष्यामि' इति व्याख्यात्रा प्रतिज्ञातं [श्लो ६—७ पुटं ६६] व्याख्यानमत्र क्रियते । £च, छ, ज, झ, ञ, पाठेषु 'चिन्त्यः' इत्यनन्तरं क्रमेण ताम्रष्टकेत्यादिपाषाणेत्यन्तानां पद्यानां प्रकारान्तरेण व्याख्या विद्यते । तद्यथा—

ताम्रष्टकाकपालप्रवाळमृद्धूळयो धराजस्य ।
शशिकान्तलवणशङ्खस्फाटिककांस्यत्रपूण्यन्दोः ॥

अथ ग्रहाणां द्रव्याणि भिन्नान्युच्यन्ते—कुजस्य ताम्रम् इष्टका कपालं प्रवाळं मृद्धूळिश्च उक्ताः । चन्द्रस्य चन्द्रकान्तः शुद्धलवणञ्च शङ्खस्फाटिकं कांस्यञ्च त्रपु च उक्ताः ॥

रक्तमणिसौवर्णं मनशिलाः काचतालमिन्द्रगुरोः ।
वैकृतमणिमरतकमृत्स्नाकाचा बुधस्योक्ताः ॥

जीवस्य रक्तमणिश्च मनशिला काचं तालं शुद्धसुवर्णश्च उक्ताः बुधस्य विकृतमणिश्च मरतकमृत्स्नाकृतश्च काचा च बुधस्योक्ताः ।

रजतस्फाटिकमुक्ता वैडूर्यञ्चापि दैत्यपूज्यस्य ।
सौरस्याञ्जनलोहं नीलं सीसं तथैव राहोश्च ॥

शुक्रस्य रजतस्फाटिकमुक्ताः वैडूर्यम् । सौरस्य अञ्जनं लोहं नीलं कृष्णसीसञ्चोक्तानि । राहोरप्येतान्येव वदेत् ॥

पाषाणसूर्यकान्तारकूटवैडूर्यसीसकानि रवेः ।
क्रूरेक्षणेन धाम्यास्सौम्यग्रहक्षवीणेऽधाम्याः ॥

पाषाणं सूर्यकान्तम् आरकूटं वैडूर्यं शुद्धसीसम् एतानि सूर्यस्योक्तधातवः । ग्रहः क्रूरेक्षितश्चेत् धमनीयाः । सौम्येक्षितश्चेदधाम्याः अशोधिताः शोधिता इत्यर्थः ॥

१
£मणिकनकरजतमुक्तातात्रायसशुक्तयोऽपरैर्विहिताः ।
२
शशिभौमजीवभार्गवदिनकृद्यमसोमतनयानाम्* ॥१२॥
$सूर्यांशकसंयुक्तं भौमद्रेक्काणमवनिसुतसूर्यौ ।
३
पश्येतां केन्द्रगतौ धातुर्धाम्यो विनिर्दिष्टः ॥१३॥
४
*सोमद्रेक्काणे वा जलचरभवनाश्रयेऽथवा नियतम् ।
५ ६
जलयोनिग्रहदृष्टे धातुरधाम्योऽत्र विज्ञेयः ॥१४॥

केचिदेवं वदन्ति—मणिश्चन्द्रस्य, कनकं भौमस्य, रजतं जीवस्य, मुक्ता शुक्रस्य, ताम्रं सूर्यस्य, आयसं शनेः, शुक्तिर्बुधस्येति । पूर्वोक्तधातून् वराधममध्यमान् उच्चस्वक्षेत्रमूलत्रिकोणमित्रशत्रुनीचेषु ग्रहे स्थिते विमृश्य नष्टमुष्टिचिन्तालाभेषु वदेत् केन्द्रत्रिकोणगतैर्ग्रहैर्बलयुतैरित्युपदेशः ॥१२॥

अथ द्रेक्काणांशकग्रहैर्धातुविशेषः कथ्यते—सूर्यांशकसहितं कुजद्रेक्काणं कुजसूर्यौ पश्येतां चेदथवा बलिनौ केन्द्रगतौ वा चिन्तितधातुर्धाम्यो भवतीत्येवं प्रष्टुर्वदेत् ॥१३॥

सोमांशद्रेक्काणे वा जलचरद्रेक्काणे वा जलराशिसम्भवे वा शुक्रचन्द्रदृष्टे धातुरधाम्यो भवति । अदग्धक इत्यर्थः । प्रवक्ता विमृश्य वदेत् ॥१४॥

१ 'यश्शुक्त' ख. २ 'मचन्द्रतन' ख, च, ज, ब. ३ 'म्योऽत्र विज्ञेयः' ङ. ४ 'सौम्यद्रे' ख, ब, र. ५ 'म्यो विनिर्देश्यः' ग, ठ; 'म्यो भुवि ज्ञेयः' झ; 'म्यो विनिर्दिष्टः' ट. ५ 'म्यो विनिर्देश्यः' ग, ठ; 'म्यो भुवि ज्ञेयः' झ; 'म्यो विनिर्दिष्टः' र. ६ 'त्र निर्देश्यः' द, ध, प.

£ झ पाठे पद्यमिदं नास्ति ।

* बरपाठयोरेतत्पद्यानन्तरं २३–२४ पद्ये दृश्येते । ततश्च चतुर्दशं पद्यम् ।

$ बरपाठयोः पद्यमिदं नास्ति.

* पद्यमिदं ङ पाठे नास्ति

रविभौमद्रेक्काणे भौमांशयुते सुवर्णमिति वाच्यम् ।
यदि वीक्षेते बलिनौ सुरगुरुभौमौ स्ववर्गस्थौ ॥१५॥

गुरुभौमांशकयुक्ता यमळा जलजा निरीक्षितास्ताभ्याम् ।
कुर्युः सुवर्णचिन्तां वियोनिधातूद्भवो दृष्टः ॥१६॥

लग्नेषु भौमभागेष्वर्कितनयश्च भवति केन्द्रस्थः ।
देवगुरुर्वा केन्द्रे सुवर्णचिन्तां विजानीयात् ॥१७॥

एतेषु चैव लग्नेष्वार्किः शुक्रो निशाकरश्चैव ।
पश्यन्ति बलसमेताश्चतुष्टये वा भवेद्रूप्यम् ॥१८॥

गुरुवर्गे लग्नगते देवाचार्ये[1] च केन्द्रमुपयाते ।
दृष्टे चारबुधाभ्यां सुवर्णमिति चिन्तितं ब्रूयात् ॥१९॥

रविद्रेक्काणे वा भौमद्रेक्काणे वा भौमांशकसंयुते स्ववर्गस्थितगुरुभौमवीक्षिते यदि सुवर्णचिन्ता वक्तव्या ॥१५॥

उभयराशौ गुरुभौमयोरेकस्यांशोदये वा जलराशियुते वा गुरुभौमाभ्यां दृष्टे सुवर्णचिन्ता वक्तव्या[1] । पूर्वोक्तधातुषु वियोनिधातुर्वा विज्ञेयः ॥१६॥

कुजद्रेक्काणोदये कुजो वा गुरुर्वा केन्द्रस्थि [ते? तः] सुवर्णं भवति चिन्तितम् ॥१७॥

भौमद्रेक्काणेषूदितेषु चन्द्रशुक्रशनिदृष्टेषु बलयुताः केन्द्रगता वा रूप्यं चिन्तितमिति वदेत् ॥१८॥

गुरुवर्गे लग्नगते देवगु (रुः? रौ) केन्द्रस्थिते आरबुधवीक्षिते चिन्तितं मुख्यसुवर्णं भवति ॥१९॥

१ 'चार्यश्च केन्द्रमुपयातः । दृष्टश्चार' ब, छ, झ, ट, न, फ; 'चार्यश्च भवति केन्द्रस्थः । दृष्टश्चार' ब, र.

1 'व्या एव वक्तव्या । अथवा पूर्वोक्तवियोनिधातुर्वा विज्ञेयः' ब, ग, छ, ज, झ.

लग्नेष्विन्दुजभागेष्विन्द्राचार्यः[1] समाश्रितः केन्द्रम्[2] ।
सौम्यो वा कुजयुक्तः करोति केन्द्रे सुवर्णाख्यम् ॥२०॥

लग्नस्थमवनिजस्य[3] द्रेक्काणं दिनकरो[4] निरीक्षेत ।
केन्द्रे चेन्द्राचार्ये[5] सुवर्णचिन्ता विनिर्देश्या ॥२१॥

जलजा यदा तु भागास्सौम्येन्दुभ्यां निरीक्षिते लग्ने ।
जलसम्भवोऽत्र धातुर्निर्देश्यश्चिन्तितो विदुषा* ॥२२॥

लग्नेषु शक्रभागेषूच्चस्थानाश्रितश्च[6] यदि चन्द्रः ।
मित्रक्षेत्रगतो वा करोति रूप्यं बलोपेतः ॥२३॥

---

बुधद्रेक्काणेषूदितेषु गुरौ केन्द्राश्रिते दृष्टे वा कृष्णसुवर्णं भवति । सौम्यकुजौ केन्द्रस्थितौ वा तदेव भवति ॥२०॥

लग्नोदितं कुजद्रेक्काणमादित्यो वीक्षते चेत् केन्द्रस्थिते गुरौ औषधिनिर्मितं सुवर्णं भवति । जीवक्षेत्रद्रेक्काणे जीवांशयुते जीवदृष्टे शुद्धसुवर्णं भवति ॥२१॥

उक्ताश्च उच्यमानाश्च ये धातवः ते जलराशिद्रेक्काणोदये सौम्येन्दुवीक्षिते जलस्थिता भवन्ति । जलसम्भवा विज्ञेया विदुषा ॥२२॥

शुक्रद्रेक्काणोदये चन्द्रः स्वोच्चमित्रस्वगृहे स्थितः पूर्वपक्षगः केन्द्रगतो रूप्यं करोति ॥२३॥

---

१ 'गे देवाचार्यः स' क, ज, ड, ढ, ण. २ 'न्द्रे' ख, ज, द. ३ 'मवनिपुत्रद्रेक्काणं वीक्षते रविर्बलवान्' ग, ठ, द, ध, प. ४ 'करेण सन्दृष्टे' ख. ५ 'चार्यस्सु' ख, ट, ब, र. ६ 'तेषु यदि' ख, ज.

---

*एतत्पद्यानन्तरं टपाठे 'इति नवमोऽध्यायः' इति लिखितं दृश्यते ।

१
सूर्यसुतद्रेक्काणाः शशिभृगुसौम्यैर्निरीक्षिता बलिभिः ।
जनयन्ति रूप्यमेव प्रश्नोत्पन्ने तु केन्द्रे वा ॥२४॥

२
लग्नेषु सौम्यभागेष्वाङ्गिरसे केन्द्रमाश्रिते रूप्यम् ।
३
अथवा त्रिकोणयुक्तौ भृगुशशिनौ वा बलोपेतौ ॥२५॥

४
स्थिरराशिद्रेक्काणा भृगुसुतभागान्विताश्च बुधदृष्टाः ।
५ ६
कार्षापणगतचिन्तां कुर्युः केन्द्राश्रिते च बुधे ॥२६॥

---

सौरद्रेक्काणोदये शशिशुक्रबुधवीक्षिते केन्द्रगता वा प्रश्ने ग्रहा द्रेक्काणाश्च रूप्यमेव
1
जनयन्ति । कुर्वन्ति कृष्णरूप्यमित्यर्थः । सर्वत्र वीक्षणोक्तकार्येषु 'षष्ठं द्वितीयभवनम्' इत्याद्युक्तन्यायो ग्राह्यः । फलनिर्देशे केन्द्रत्रिकोणोक्तदृष्टिर्ग्राह्या । चिन्तासूभयं ग्राह्यम् ॥२४॥

सौम्यद्रेक्काणोदये गुरौ केन्द्राश्रिते शुद्धरजतं वक्तव्यम् । अथवा केन्द्रत्रिकोणगतौ बलिनौ भृगुचन्द्रौ चेत् शुद्धरजतमेव भवति ॥२५॥

2
स्थिरराशौ गुरुद्रेक्काणे बुधदृष्टे युते बुधे केन्द्रगते वा कार्षापणाश्चिन्तिताः । हस्तिमहिषादिकृतचिह्ना इत्यर्थः । एवं शुक्रद्रेक्काणे रजतकाशा ज्ञेयाः ॥२६॥

---

१ 'सौरस्य भागलग्नाः शशि' ग, घ, ङ, च. २ 'रसि के' ख; 'रसः केन्द्रमाश्रितो रू' ग, ज, ठ, द, ध. ३ 'गुसुतशशिनौ बलोपेतौ' ख, ट. ४ 'कषपाषाणचि' ठ. ६ 'श्रितोऽपि बुधः' ख.

---

1 'कुर्वन्ति' क. 2 'वा काशाश्चि' ख, ग, ज, ञ.

रविशशिन द्रेक्काणे चन्द्रे केन्द्राश्रिते[1] भवेद्धातुः ।
बलवान् सूर्यः पश्येन्निर्देश्यं ताम्रलोहमपि ॥२७॥

भौमार्कद्रेक्काणे बुधगुरुशुक्रांशकैस्तु सम्भिन्ने ।
बलवति पश्यत्यर्के ताम्रं चिन्तागतं विद्यात् ॥२८॥

द्रेक्काणेषु रवीन्द्वोर्बुधयमभागाश्रयेषु बलवद्भिः ।
दृष्टेषु शशिबुधार्कैः कांस्यप्रभवा[2] भवेच्चिन्ता ॥२९॥

*बुधशुक्रद्रेक्काणे चन्द्रे केन्द्रे भवेद्विलग्ने वा ।
अन्यैर्बलिभिर्दृष्टे कांस्याश्रयिकां वदेच्चिन्ताम् ॥३०॥

दण्डास्त्रशस्त्रधारि[3]द्रेक्काणे शशियुते[4] भवेत्कांस्यम् ।
यद्यवनिसुतः पश्येद् बलान्वितः प्रश्नवेळायाम् ॥३१॥



---

रविद्रेक्काणे शशिद्रेक्काणे वा चन्द्रे केन्द्राश्रितेऽपि धातुचिन्ता वक्तव्या । तत्र बलवान् सूर्यः पश्यति चेत्ताम्रम् । शशित्रीक्षिते लोहम् ॥२७॥

रविकुजद्रेक्काणोदये बुधगुरुशुक्रांशकयुते बलवता अर्केण वीक्षिते चिन्तागतं ताम्रमिति वदेत् ॥२८॥

रविचन्द्रयोर्द्रेक्काणेषूदितेषु बुधयमवर्गाश्रयेषु बलयुतैः समबलैर्दृष्टेषु चिन्ता कांस्यप्रभवा भवेत् ॥२९॥

बुधशुक्रद्रेक्काणे लग्नगते चन्द्रे केन्द्रे अन्यैर्बलिभिः, रविकुजशशिभिर्बलयुतैः, दृष्टे कांस्यचिन्तां वदेत् ॥३०॥

दण्डास्त्रशस्त्रधारिणि द्रेक्काणे शशियुते कांस्यमेवेति वदेत्, यदि बलयुतभौमवीक्षिते शशिनि ॥३१॥

---

१ 'चन्द्रः केन्द्राश्रितो भवति धातुः' ख. २ 'वां वदेच्चि' घ, ठ, प. ३ 'स्त्रभाजि लग्ने द्रे' ख, ङ, झ, ञ, ब, र. ४ 'ते वदेत्कांस्यम्' ख.

---

* पद्यमिदं घ च छ फ पाठेषु नास्ति.

एतेषु चैव लग्नेष्वार्किः पश्येद्विलग्नमतिबलवान् ।
उदयेऽथवा बलिष्ठः प्रश्ने कृष्णायस[1] कु[2]र्यात् ॥३२॥

सौरांशके विलग्ने द्रेक्काणे वार्कजस्तु केन्द्रगतः ।
अन्यै[3]र्बलिभिरदृष्टः करोति कृष्णाय[4]सं सततम्[*] ॥३३॥

दिवसकरद्रेक्काणे लग्ने सौरांशकेन यु[5]क्ते स्यात् ।
केन्द्रगतो मन्दो वाप्यायसमिति पृच्छते ब्रूयात ॥३४॥

आमिषफलकलशधरैर्द्रेक्काणैरिन्दुकोणमन्दृष्टः ।
भाजनविन्यासोऽस्मिन् पूर्णे पूर्णं विनिर्देश्यम् ॥३५॥

---

दण्डास्त्रशस्त्रायुधायसधारिषु द्रेक्काणेषु शनिदृष्टेषु बलयुतशनियुतेषु वा कृष्णायसं कुर्यात् ॥३२॥

सौरांशके द्रेक्काणे वा लग्नगते सौरे केन्द्रगते अन्यैर्बलयुतग्रहैरदृष्टे कृष्णायसमेव करोति ॥३३॥

रविद्रेक्काणे सौरांशयुते केन्द्रत्रिकोणगते मन्दे चेदायसमिति[1] पृच्छते ब्रूयात्, सौरत्रिंशांशकयुक्तो दिवसकरद्रेक्काण एव सिंहः स्यात् ॥३४॥

एवं सामान्येन धातुविशेषे निश्चिते तस्य भाण्डागारादिभेदसम्भवे सति भाण्ड-नियमार्थमामिषफलेत्याह—पूर्वोक्तधातुविशेषान् विचिन्त्य द्रेक्काणग्रहयोर्बलयुतेन धातुं

---

१ 'कार्ष्णाय' ख. २ 'सं ब्रूयात्' ज, झ, ठ. ३ 'भिर्दृष्टः' ख. ४ 'कार्ष्णाय' ख. ५ 'न संयुक्ते' ख, ट, ठ, ध, प.

---

1 'श्वेताय' ख, ग, च, झ, ञ.

---

* ठदधपपाठेषु पद्यमिदं नास्ति ।

गुरुकुजयोस्सौवर्णं शुक्रे रौप्यं बुधे तु मणिभाण्डम् ।
दन्तास्थिचर्मजातं सौरे कृष्णायसञ्चापि ॥३६॥

भाजनमिन्दोः कांस्यं काचमयं वा रवौ तु ताम्रमयम् ।
मृद्भाजनमित्यपरे दिनकरकुजयोर्व्यवस्यन्ति ॥३७॥

---

निश्चित्य प्रष्टुर्भाजनविशेषान् ब्रूयात् । आमिषफलकलशरत्नसुवर्णधारिषु द्रेक्काणेषूदितेषु चन्द्रशनिदृष्टेषु चेद् भाजनचिन्ता वक्तव्या । अन्येषु, चिन्तासु भाजने न्यस्तं युक्तं सुवर्णं वा सस्यं वा विमृश्य वदेत् । अत्र चन्द्रे सम्पूर्णे सम्पूर्णं, क्षीणे स्वल्पम्[1] । निधिष्वपि प्रश्ने विमृश्य वदेत् सुवर्णम् । अथवा जलपूर्णे राशौ लग्ने सस्यं चेत् पूर्णमिति वदेत् । ऊर्ध्वमुखे पूर्णं, तिर्यङ्मुखेऽल्पम्, अधोमुखेऽत्यल्पमिति । अनेन सस्यं भाजनं वा तन्न्यस्तं सस्यं वा वदेदिति[2] ॥३५॥

अथ तेषामेव भाजनानां प्रकृतिभेदान् द्रष्टृग्रहभेदादाह—गुरुकुजयोः सुवर्णकृतं भाजनं वदेत् । शुक्रे केन्द्रत्रिकोणगे रजतकृतं, बुधे मणिकृतं भाजनम् । दन्तास्थिचर्मजातं सौरे अथवा कृष्णायसकृतं भवति । दन्तादयो धातुभेदा भवन्ति जीवधातुत्वात् । नष्टमुष्टिचिन्तासु सौरस्य चर्मदन्तास्थीन्युक्तानि वदेत् । एवमन्येषु ॥३६॥

इन्दोः कांस्यं काचपात्रं वा भवति । रवौ ताम्रम् । अथ दिनकरकुजौ बलक्षीणौ केन्द्रत्रिकोणगौ चेत् मृत्कृतं पात्रं भवति । यदि बलयुतौ, निर्धने पृच्छके मृत्पात्रमेव भवति । दिनकरे मूलाः । रविद्रेक्काणगते पश्यति चेत् काष्ठमयः । अन्यथा मृण्मयम् । भोजनप्रश्ने द्रेक्काणवशात्पात्राणि ज्ञेयानि । भोजनादन्येषु ग्रहैः केन्द्रत्रिकोणगतैर्वाच्यानि ॥३७॥

---

1 'णेष्वल्पम्' ख, ज.

2 'ति । सिंहान्त्यो मांसफलधृक्कर्काद्यः फलमात्रधृक् ।
कन्याद्यान्त्या तुलामध्यः कुम्भाद्याश्च घटे च च्युता ।
फलमेवं कल्पन्ते द्रेक्काणपुरुषाः' ॥३५॥ क, घ, ङ, च.

वर्माभरणधरेषु द्रेक्काणेष्वारभौमदृष्टेषु ।
आभरणादेशविधिर्वर्णाकृतयो ग्रहैर्वाच्याः ॥३८॥

[१] सूर्ये कर्णाभरणं जीवे हृदयोरसोश्च सौवर्णे ।
मौक्तिकशृङ्खलपाशकवृत्तानीन्दोर्ललाटे च ॥३९॥

[२] मुक्ताङ्गुळीयपूरिमसुषिरग्रीवाभरणानि भृगुतनये ।
सौवर्णकण्ठसूत्रप्रवाळकाद्यानि भूमिसुते ॥४०॥

---

कवचाभरणरत्नप्रोतकाश्च द्रेक्काणा आभरणरत्नचिन्तां कुर्युः । ग्रहद्रेक्काणैर्वर्णञ्च आकृतिञ्च विमृश्य वदेत्[1] । सूर्यस्य सबलस्य कर्णाभरणं मुकुटञ्च भवति[2] । अबलयुतस्य कृष्णं सुवर्णाभरणं भवति । जीवस्य हृदयोदरबन्धनञ्च सुवर्णकृतं वस्त्रं रत्नयुतं कर्णाभरणं वा भवति । मुक्तारचितं शृङ्खलञ्च हस्ताभरणं पादाभरणञ्च रजतकृतानि च विकृतान्याभरणानि वृत्तानि पाशयुक्तानि चन्द्रस्योक्तम् (?) । सम्पूर्णचन्द्रस्य ललाटबन्धनञ्चोक्तानि ॥३८॥



एतस्यार्थं [मुक्तम् ? उक्तः] चकाराद् ग्रहस्थितद्रेक्काणवशात् शरीरस्योर्ध्वमध्याधोभागभूषणाभरणं ग्राह्यं पूर्वोक्तधातुरचितं[3] भवतीति ॥३९॥

---

१ 'व्याळे हृ' क, ग, ट, ड, ढ, ण, द, न, प, फ, ब, र. २ 'सूरिमसु' ख, छ, ज, झ, र.

---

1 'त । वीणामध्यान्तिमौ वर्मभृतौ, तस्य मध्यान्त्यावजमीनयोः भृङ्गस्य व दमौ कर्कमध्यमो मृगमध्यमः आकल्पधारिणो ह्येते द्रेक्काणाः तस्य सूचकाः । ऊर्ध्वमुख्यादिभिरूर्ध्वाद्याभरणभेदः । वर्णाकृतिस्तु दृष्टग्रहवशेन वा वदेत् ।' घ. 2 'ति । बलयुतस्य' क, ख, घ, ङ, च, ज, झ, ञ. 3 'ति । तद्यथा व्याला गुरुदृष्टौ हृदयोरसकण्ठाभरणानि । इन्दुदृष्टौ तं मौक्तिकं शृङ्खलं वा पाशं वा विद्वन्मतं स्वर्णकृतं कण्ठसूत्रं वा ॥ शुक्रस्य' च.

[1] नीलकमार्के विद्याद् ग्रीवाभरणञ्च भवति यन्नष्टम् ।
दारकभूषणमाहुर्मुख्यं बलसंयुते सौम्ये ॥४१॥

इति कृष्णीयशास्त्रे[2] नवमो[3]ऽध्यायः ।

शुक्रस्य मुक्ताभरणमङ्गुळीयं पूरिमञ्च सुषिरञ्च[1] कटिसूत्रञ्च कण्ठाभरणञ्च । एतानि चोक्तानि रजतस्वर्णकृतानि ग्रहयुतवीक्षणेन [यम् ? यानि] प्रायेण स्त्रीणां भवन्तीति विद्वन्मतम् । सुवर्णकृतं कण्ठसूत्रञ्च[2] प्रवाळकादि कुजस्य हस्ताभरणञ्च वक्तव्यम् ॥४० ।

नीलकं कण्ठाभरणं शनेः । अथवा लोहकृतं नूपुरं वा भवति । राहोरप्येवमेव कृष्णायसकृतं भवति बन्धशृङ्खला च । केन्द्रत्रिकोणगतैर्बलयुतैराभरणानि नष्टमुष्टिचिन्तासु वदेत् । बुधस्य बलयुतस्य शिशूनां भूषणं भवति पुष्पकृतं वा । अबलस्य स्थितराशिस्वाम्युक्तं भवति । अस्मिन् नोक्तमपि पुष्पचिन्तालक्षणं वक्ष्ये— पुष्पानुलेपनालङ्कृतेषु द्रेक्काणेषूदितेषु बुधशुक्रवीक्षितेषु च प्रष्टुः कुसुमचिन्तां वदेत् । पद्मं[3] हरितश्च तुळसी चोक्ता सूर्यस्य । चन्द्रस्योत्पलादिजलसम्भवाः श्वेताश्च । कुजस्य रक्ताश्च कण्टकपुष्पाश्च कानकगन्धिश्चोक्ताः[4] । बुधस्य नीलोत्पलञ्च बकुलं नीलवर्णश्चोक्ताः । गुरोर्जातिपुष्पञ्च कुमुदञ्च चम्पकपुष्पञ्चोक्तम् । शुक्रस्य केतकी च मल्लिका चोक्ता । शनिराह्वोर्दुर्गन्धो निष्फलानि कान्तारजानि भवन्ति । एवं ग्रहोक्तवर्णाकृतिजपुष्प नष्टमुष्टिचिन्तासु ग्रहैर्द्रेक्काणेन वा विमृश्य कथयेत्[5] ॥४१॥

[इति कृष्णीयव्याख्यायां चतुरसुन्दर्यां नवमोऽध्यायः ।]

---

१ 'नीलं यमस्य वि' ख. २ 'इति कृष्णीयशास्त्रे धातुयोनिचिन्ताध्यायस्तृतीयः' ग; 'इति धातुयोनिः' ङ, भ, म; 'इति कृष्णीये षष्ठमोऽध्यायः झ; 'दशमोऽध्यायः अथ धात्वधिकारः' ट. 'इति कृष्णीये धातुयोनिस्तृतीयोऽध्यायः' ठ ३ 'ये धातुयोनिः' छ.

---

1 'सूरि' ख, ग, छ, ज, झ, ञ. 2 व्यम् । 'पूरिमशब्दः पुंनूपवाची ।' क, घ, ङ, च. 3 'सोञ्च सू' ख, ग, छ, ज, झ, ञ. 4 'ननग' घ. 5 'त् । इति कृष्णीयशास्त्रव्याख्यायां चतुरसुन्दर्याख्यायां धातुयोनिचिन्ताध्यायस्तृतीयः ।' ज.

अथ दशमोऽध्यायः

चापास्त्रदण्डधारिषु भीषणवित्रासयत्सु भागेषु ।
समरास्त्रचोरचिन्ता दर्शनमथवात्र चोराणाम् ॥१॥

द्रेक्काणेषु विहङ्गेषूडुरशूक्राश्रयेषु सर्वेषु ।
दृष्टे च भृगुबुधाभ्यां वस्त्राश्रयिका भवेच्चिन्ता ॥२॥

कवचध्वजवस्त्राविककञ्चुककम्बळधरेषु भागेषु ।
*बुधशुक्रचन्द्रमोभिर्दृष्टेषूर्णाकृतं वस्त्रम् ॥३॥

---

धनुरस्त्रायुधदण्डधारिणश्च भीता वित्रासकाश्च ये द्रेक्काणाः तेषामुदयेषु समरास्त्रचिन्ता चोरचिन्ता वा ग्रहदर्शनाद् विमृश्य वदेत् । तेषु यात्रां पृच्छेत् [चेत्] चोराहृतसर्वस्वो भवति । युद्धे चोरयुद्धं वदेत् । विरोधश्च भवति बन्धोर्वा [1] ॥१॥

यस्य कस्य राशौ मकरमानद्रेक्काणाश्च विहङ्गद्रेक्काणाश्च उदिताश्चन्द्रशुक्रयुता वा भृगुबुधदृष्टा वस्त्रचिन्तां कुर्युः ॥२॥

---

१ 'विद्रावयत्सु' ब, र. २ 'पापेषु' घ, च, ढ, फ. ३ 'रास्त्रकरी चि' क, छ, ज, ट to ण, द न प, ब, र. ४ 'काश्रितेषु स' क, ज, ड, ढ, ण, न, ब. ५ 'षु चैतेषु' ट, ड. ६ 'श्रयजा भ' ख. ७ 'ळयुतेषु भा' ख, र.

---

1 'र्वा । वोणान्त्यमध्यौ तौलयन्तश्चापाद्यश्च धनुर्धराः ।
मेषाद्यान्त्यौ युग्ममध्यः सिंहतौल्यादिमान्त्यौ ।
भृङ्गादिमध्यमौ मीनवृश्चिकौ कर्कटादिमः ।
सिंहाद्यान्त्यौ भीषणा स्युर्वृषमीनादिपश्चिमाः ।
युग्माद्यः कर्कितुलयोर्मध्यान्त्यौ त्रासका [ल ? इ] मे
द्रेक्काणेषु' च.

---

* घ च फ पाठेषु पद्यार्धमिदं 'वल्कलमार्को'ति (श्लो० ४) पद्यानन्तरं लिखितं दृश्यते ।

वल्कलमार्किकुजाभ्यां[1] गुरुणा[2] कौशेयमिन्दुजे बालम् ।
शशिना दुकूलपट्टं[3] रविणा चर्माम्बरं भृगुणा ॥४॥

मलिनच्छिन्नदृढादृढदग्धस्थूलाम्बुधौतजीर्णानि ।
सौम्येन्द्वार्यभुजङ्गमकुजरविभृगुसौरजानि स्युः[4] ॥५॥

---

कवचध्वजधारिणश्च वस्त्रयुताश्च रोमयुताश्च कञ्चुककम्बळधारिणश्च द्रेक्काणा[1] लग्नगता बुधशुक्रचन्द्रदृष्टा ऊर्णाकृतं कुर्युः[2] । कुजरविशनिदृष्टा वल्कलं वृक्षवर्मजातं कुर्युः । गुरुः कनकरचित् ॥३॥

वृक्षत्वचा कृतं गोणिकादिवस्त्रं शनौ शयनं वा विमृश्य वदेत् । त्वचा कृतमपि सूक्ष्मांशुकं रक्तांशुकञ्च कुजे । गुरुवीक्षिते कुशारहितम् । बुधे प्रवाळमात्रपल्लवसदृशम् । शशिवीक्षिते दुकूलपट्टञ्च वदेत् । रविण शयनचर्म कवचञ्च वदेत् । तन्तुकृतं वस्त्रं शुक्रेणेति । शशिना रोमचितेन च रोमचरितं वस्त्रं वदेत् । केन्द्रगतैर्बलयुतैर्ग्रहैः प्रष्टुर्नष्टलाभे वदेत् । सामान्येन वस्त्रं वदेत् ॥४॥

सौम्ये मलिनवस्त्रम् । चन्द्रे छिन्नम् । गुरौ दृढम् । राहोरदृढम्[3] । कुजे दग्धम् । रवौ स्थूलम् । शुक्रे अम्बुधौतमम्बरम् । मन्दे जीर्णम् ॥५॥

१ 'जमा' ब, र. २ 'रविणा' ख; 'भृगुणा' ग, ठ, प. ३ 'लवस्त्रं' ख.
४ 'सौरजानां स्युः' ख; 'सूर्यजानां, स्युः' ग, ठ, द, ध प; 'सूर्यजानि स्युः' ज.

---

1 'श्चन्द्रे' ख, ज. 2 'र्युः ॥ गुरुणा कनकरचिताः । कवचिन उक्ताः ।—

'ध्वजधार्यळिमध्यः स्याद्वस्त्रभृङ्मीनपश्चिमः ।
अळिमध्योऽङ्गना चान्त्ये मेषकाश्च त्रयस्तथा ॥
अथाविकधरास्तत्र मृगाद्यान्त्यौ घटादिमः ।
वृषान्त्यो धन्विनोऽन्यश्च वक्ष्यते तु सकञ्चुका ॥
कन्यामध्यत्रिभागश्च ....वली ।
कुम्भमध्यस्तु वस्त्राणां ।
भेदोऽनन्तरमुच्यते । कुजरविशनि' च. 3 'राहौ अ' ख, ज.

*द्रेक्काणसदृशवर्णं वस्त्रं तद्वाससा समानं वा ।

द्रष्टृग्रह[1]वर्णं वा बहुभिश्चित्रं ग्रहैर्वाच्यम्[2] ॥६॥

दण्डामिषयष्टिधराश्शाखाफलमूलधारिणश्च तथा ।

द्रेक्काणा धान्यकरा वृक्षसमीपाश्रिताश्चैव ॥७॥

अनेन वाच्यप्रकारमाह—उदयगते द्रेक्काणे बलयुक्ते तस्य वर्णं वस्त्रं भवति । तद्द्रेक्काणवाससा समानवस्त्रं वा वदेत् । द्रष्टृ[1]ग्रहस्य बलयुतस्योक्तवस्त्रं वा । यदि तत्र बलयुतैर्बहुभिर्ग्रहैर्दृष्टे बहुविधं वस्त्रं वदेत् । ग्रहसंख्याप्रमाणं विमृश्य वदेत् । द्रेक्काणसदृशवर्णस्वमुदयस्य बलीयस्त्वे । मध्यमबलत्वे तद्वाससा समानत्वम् । दौर्बल्ये तु द्रष्टृग्रहवर्णता ॥६॥

अथ मूलचिन्तामाह—दण्डामिषयष्टिधराः । आमिषं मांसम् । यष्टिः वृक्षदण्डः । आमिषवृक्षदण्डधरा वृक्षशाखाश्रिताश्च वृक्षसमीपाश्रिताश्च फलमूलधराश्च रविशुक्रवीक्षिताश्च द्रेक्काणा धान्यफलमूलचिन्तां कुर्युः[2] ॥७॥

१ 'दृष्टग्र' ख, ङ, छ, झ, ट, ठ, द, न, प; 'प्रष्टुर्ग्रह' फ. २ 'त्रं समादेश्यम्' क, ग, ठ, ध, प.

1 'दृष्टग्र' ख. ग, छ, ज, झ, ञ. 2 कुर्युः । दण्डामिषफलधारिण उक्ताः—

कर्काद्यमध्यसिंहाद्याः शाखाद्याश्रयिणः पुनः ।
अळिमध्यश्च मीनाद्यः तुलाकर्कादिमौ पुनः ॥
मूलं दधाते वृक्षाणां सन्निपाश्रयिणः पुनः ।
युग्माद्यमध्यौ सिंहाद्यः कर्को मध्यादिमौ तथा ॥
तुलादिमौ मांसफलं दण्डाग्र उदिताः पुरा ।' च.

* बरपाठयोः पद्यमिदं नास्ति

असुरार्क्योस्तृणमूले जीवस्येक्ष्वादिमधुररसवन्तः* ।
भृगुकुजरविशशिविदुषां वल्यङ्कुरवृक्षगुल्मलताः ॥८॥

पापैर्विषकण्टकिनः सौम्यैः सक्षीरमधुररसवन्तः[1] ।
तिर्यक्कण्टकिनोऽर्के कुज उन्मुखिनो यमे चाधः ॥९॥

*क्रूरक्षेत्रे क्रूरैर्दृष्टे जनपानलेपनायोग्याः ।
सौम्यक्षेत्रे सौम्यैर्दृष्टे भोग्याश्च लेप्याश्च ॥१०॥

असुरार्क्योस्तृणमूले । राहोर्मूलं फलं तृणजम् । मन्दस्य मूलमेव । गुरोरिक्षुशर्करादिमधुररसाः मधुरफला[श्च ? नि च]भवन्ति । भृगोर्वल्लीकुसुमम् । कुजस्याङ्कुरग्राह्याः[1] कण्टकवृक्षाः । सूर्यस्य वृक्षाः फलग्राह्याः । चन्द्रस्य क्षीराढ्या गुल्माः । बुधस्य पुष्पफलाग्राह्या लताः ताम्बूलादि । तत्र तिर्यग्गतास्ताम्बूलादन्यलता राहोः ॥८॥

बलरहितः सूर्यः पाप एव । पापग्रहैर्विषवृक्षाश्च कण्टकवृक्षाश्चोक्ताः । तत्र राहोर्विषवृक्षाः । सौम्यः सक्षीरमधुररसवन्तः—चन्द्रस्य क्षीरवृक्षो जलराशिस्थितस्य । स्थलराशिगस्य मधुररसयुक्तः । जीवस्य मधुररसयुताः । बुधस्य मिश्ररसयुक्तः । शुक्रस्याम्लमधुररसः । वृक्षेषु तिर्यक्कण्टकिनः अर्कस्य । उन्मुखकण्टकवृक्षाः कुजस्य । दुर्भगकण्टका अधोमुखाश्च वृक्षा मन्दस्येति । राहोरपि शनिवत् ॥९॥

क्रूरक्षेत्रगते ग्रहे क्रूरदृष्टे पूर्वोक्तफलमूलरसा न भोग्या न लेप्या न सेव्या उच्छिष्टा

१ 'म्यैर्वा क्षार' ग, ध.

1 'क्षफने ग्र ह्य' क, घ, ङ, च.

* इतोऽनन्तरं नपाठ नवमश्लोकोत्तरार्धादिरेव विद्यते ।

* अस्य पद्यस्य स्थाने ग ठ द ध. प पाठेषु अल्पाल्पभेदोपेतमेतत् पद्यं वर्तते—

पापग्रहेण दृष्टे क्रूरक्षेत्रे न सेवनायोग्याः ।
अङ्गार्हाः सौम्यगृहे भोज्यास्सर्वत्र शुभदृष्टे ॥

1 2
*क्रूरा .बहिरस्थिकराः सौम्याः कुर्वन्त्यथान्तरस्थियुतम् ।
3
कुरुतो निरस्थि फलमिन्दुभास्करौ राशयोऽप्येवम् ॥११॥

*शुभतरुविटपिगिरिद्रुमकदळीक्रमुकादितालवेणूनाम् ।
4
शुक्रमहीसुतरविशशिगुरुयमसौम्यैर्वनानि स्युः ॥१२॥

---

वा अपूता वा दुर्गन्धयुता वा भवन्ति । सौम्यगृहस्थितग्रहे पापवीक्षिते लेप्या भवन्ति । न भोज्या भवन्ति । सौम्यगृहस्थितसौम्यग्रहे सौम्यदृष्टे भोग्या वा लेप्या वा सेव्या वा भवन्ति ॥१०॥

क्रूरग्रहाः सर्वे फलस्य बहिरस्थिकराः । सौम्यग्रहा अन्तरस्थियुतं फलं कुर्वन्ति । बहिरस्थयो नाळिकेरादयः । अन्तरस्थय आम्रतिन्त्रिण्यादयः । निरस्थयः कदळ्यादयः । तत्र गुरुशुक्रौ बीजयुतौ । चन्द्ररवी अस्थिहीनफलं कुरुतः । एतानि फलानि राशीनामपि वदेत् । क्रूरक्षेत्रगतस्य कण्टकयुतफलं भवति ॥११॥

सामान्येनोक्तफलानां वृक्षानाह—शुभवृक्षः शुक्रस्य नाळिकेरश्च, स्ववर्गस्थितस्य आम्रवृक्षः । कुजस्य विटपयुतः कण्टकयुक्तश्च अभोज्यश्च । सूर्यस्य गिरिजाता गृहसभाकृतार्था वृक्षाः । चन्द्रस्य कदळ्यादिजलवृक्षाः । जीवस्य क्रमुकश्च पक्वाम्रं च पक्वनाळिकेरफलञ्च पनसफलञ्च मुन्त्रिकपक्वञ्चोक्तम् । मन्दस्य तालवृक्षाः । चन्द्रस्यापि तालः । बुधस्य वेणुश्च भवति । शनिवद्राहुः ॥१२॥

---

१ 'स्थिभरान्' ख; 'स्थिकरान्' ग; 'स्थियुताः' र. २ 'न्ति चान्तरस्थियुतान्' ख; 'न्त्यतोऽन्तरस्थियुतान्' ठ, द, प. ३ 'फलमुडुपतिसूर्यौ' ख. ४ 'क्रावनेयर' ग, ट. ठ, द.

---

* ग द पाठयोः पद्यमिदं १२ तमपद्यानन्तरं लिखितम् । ठपाठे १३ तमपद्यानन्तरं लिखितम्

* धपपाठयोरेतत्पद्यं नास्ति झपाठे एतत्पद्यात्प्राक्—

गुरुशुक्रौ बीजयुतौ चन्द्ररवी अस्थिहीनफलं कुरुतः ।
एतानि फलविशेषा राशीनामपि समीक्ष्य वदेत् ॥

इति पद्यमधिकतया विद्यते ।

निर्यासापक्वफले शुक्रस्य गुरोर्विपक्वफलमाहुः[1] ।

काण्डं[2] तण्डुलमिन्दोः कन्दास्सौरेर्भवेन्मूलम् ॥२३॥

भौमे कण्टकपुष्पे शाखापत्रे बुधस्य मुष्ट्यान्तु ।

अस्थित्वक्परिणद्धं सवितुस्त्वक् चापि निर्देश्यम्[3] ॥१४॥

---

अनेनापि फलविशेषानाह—शुक्रस्य निर्यासफलञ्चापक्वफलञ्चोक्तम् । जलराशिस्थशुक्रस्य निर्यासः । चरराशिस्थभृगुदृष्टे त्वाम्रफलम् । गुरोर्विशेषात् पक्वफलं मधुरफलमुक्तम् । क्षीणचन्द्रस्य काण्डम् । काण्डस्य कब्विति भाषा । सम्पूर्णचन्द्रस्य शालीतण्डुलम् । सौरस्य कन्दाः । राहोरपीति । ग्रहरहिते राशौ केन्द्रे ग्रहस्योक्तं फलं मूलं सस्यं वा केन्द्रगतेन बलयुतेन राशिना वदेत् । ग्रहेणापि जलशुष्कराशीनपि । ग्रहस्थितराश्यंशद्रेक्काणभागानवलोक्य तेषां बलयुतानामधिकं बलयुतस्योक्तं संयुज्य ग्रहफलं वदेत् ॥१३॥

भौमे कण्टकञ्च पुष्पञ्च । बुधे स्थलस्थभौमदृष्टे कण्टकम् । जलस्थभौमदृष्टे पुष्पं शा[खा? खां] वा पत्रं वा वदेत्[1] । मुष्ट्यामपि वदेत् । ग्रहे फलमूलसस्यानीत्यर्थः । अस्थित्वग्युतं फलं सवितुर्वदेत् । अत्र मरीचिफलं सूर्यस्य । कटुकं कुजस्य । मूलेषु क्रूरराशिगतस्य सूर्यस्य शुण्ठीमूलम् । सौम्यराशिगतस्य रजनी । जलशुष्कराशिवशादार्द्रशुष्कत्वञ्च वदेत् । चन्द्रस्य कूबाचूर्गन् । कुजस्य श्लेना च शाकुटञ्च । बुधस्य पुष्पं मूलञ्च औषधमूलञ्च । जीवस्य क्षीरकन्दादि स्वादु मूलमुक्तम् । शुक्रस्य दीर्घकन्दादि । सौरस्य ऋजुकन्दा उक्ताः । बलयुतस्य राहोस्सौरवत् । बलहीनस्य वनकन्दम् ॥१४॥

---

१ 'हुः । चन्द्रस्य काण्डतण्डुलकन्दा सौरे भवेन्मूल' ट. २ 'काण्डजत' क, ख, ड, ढ, ण. ३ 'निर्देश्या' ख, झ, ट; 'निर्दिष्टम्' ग, ठ, द, ध, फ.

---

1 'वा चर्म पत्रं वा' घ, ब, छ, झ, ञ.

कोद्रवकुलस्थकण्वं[1] कुजस्य तिलकृष्णधान्यकं[2] सौरेः ।
शुक्रस्य रक्तशाली निष्पावाद्याः[3] स्युरर्कस्य ॥१५॥
शशिनो गोधूमयवाः[4] मुद्गव्रीही बुधस्य निर्दिष्टौ ।
जीवस्य षष्टिकाद्याः[5] स्वामिभिरुक्तानि[6] भवनानि[7] ॥१६॥

इति[8] कृष्णीय[9]शास्त्रे[10] मूलयोनि-
चिन्ता[11]ध्यायो दशमः ।

---

अथ सस्येषु श्वेतकोद्रवश्च कुलस्थश्च कण्वश्च कुजस्य । कण्वं कटं तिलश्च कृष्णकोद्रवश्च सौरस्य । शुक्रस्य रक्तशाली । रवेर्निष्पावश्च कोलश्च आढकी च उक्तम् ॥१५॥

चन्द्रस्य जलराशिगतस्य यवाः । स्थलराशिगतस्य गोधूमः । बुधस्य बलयुतस्य मुद्गम् । अबलस्य कृष्णव्रीहिः श्यामा वा । जीवस्य षष्टिदिनवर्धितराजशाली । पुनः कुजस्य प्रियङ्गुसस्यञ्च वदेत् । राशिसस्यं स्वाम्युक्तं भवति । सूर्यस्य व्रीहिरिति सामान्यपक्षः । द्रेक्काणवशात् फलमूलसस्यानि सामान्येन ज्ञात्वा त्रिकोणगतैर्ग्रहैर्बलयुतैः उक्तन्यायेन विशेषान् ज्ञात्वा नष्टमुष्टिचिन्तासु वदेत्[I] ॥१६॥

---

१ 'काण्डं' ख, ङ, ब. २ 'न्यकौ' ख, ङ, छ, झ; 'न्यके' ग. ३ 'ष्पाकाद्याः' ब, र. ४ 'मयवौ' क, ख, ग, च, छ, ठ, ड, ढ, ण, द, प. ५ 'षाष्टि' ख, घ, ङ, च, छ, ज, झ, ठ, द, प, फ, ब, र ६ 'भिदद्व्यानि राशीनम्' ख. ७ 'नि । एकादशोऽध्यायः मूलाधिकरणम्' ट; 'नि । मूलयोनिः समाप्ता' ब; 'नि मूलयोनि' भ, म. ८ 'इति मूलयोनिः' ङ; 'इति कृष्णीये नवमोऽध्यायः' झ. ९ 'ये मूलयोनिचिन्ता चतुर्थोऽध्यायः' प. १० 'स्त्रे पञ्चमोऽध्यायः' र. ११ 'यश्चतुर्थ' ग.

---

I 'त् ॥ इति कृष्णीयशास्त्रव्याख्यायां चतुरसुन्दर्याख्यायां मूलयोनिचिन्ताध्यायश्चतुर्थः' ज.

अथैकादशोऽध्यायः ।

सौम्यानां द्रेक्काणा बलिभिस्सौम्यैर्निरीक्षिता वापि ।
सौम्यालय[1]संजाता विज्ञेया जीवयोनिकराः ॥१॥

*नखदन्तरोम[2]मज्जास्थित्वग्विट्[3]भृङ्गमांसशुक्लानि ।
द्विपदचतुष्पदपक्षिसरीसृपजातानि जीवाश्च ॥२॥

द्विपदेक्षणयोगाभ्यां द्विपदी सर्वत्र जायते जातिः ।
एवं शेषाणामपि विषमास्तीक्ष्णा ग्रहैः पापैः ॥३॥

वृषादियुग्मराशयस्सर्वे सौम्यराशयः । सौम्यग्रहाणां द्रेक्काणाः सौम्यराशिसम्भवाः बलिभिस्सौम्यैर्निरीक्षिता युक्ता वा जीवचिन्तां कुर्वन्ति ॥१॥

जीवाश्चतुर्विधाः—द्विपदाः चतुष्पदाः पक्षिणश्च सरीसृपाश्च । नखाद्युक्तद्रव्यञ्च ग्राह्यम् । मेषादीनां नखादिसम्बन्धो भौमादीनामप्युच्यते । मेषस्य नखम् । वृषस्य दन्तः । मिथुनस्य रोम । कर्कटकस्य मज्जा । सिंहस्य अस्थि । कन्यायास्त्वक् । तुलाया विष्ठा । वृश्चिकस्य मूत्रम् । धनुषः भृङ्गम् । मृगस्य मांसं रुधिरम् । कुम्भस्य लिङ्गम् । मीनस्य शुक्लम् । एते प्रयोजनाद् ग्राह्या इत्यर्थः । एवं भौमादीनां ज्ञेयाः । लिङ्गग्रहणमुपदेशः ॥२॥

द्विपदराशिगतद्विपदग्रहवीक्षणाद्वा योगाद्वा सर्वत्र भावे द्विपदचिन्ता जायते । एवं चतुष्पात्पक्षिसरीसृपान् वदेत् । उक्ता द्विपदादयः पापग्रहैर्विषमास्तीक्ष्णा भवन्ति । सौम्यैः साधवः सौम्यभावा भवन्ति ॥३॥

---

१ 'यजाता वा' क. २ 'त्वचर्ममज्जा' क. ३ 'नाम्' ख.

---

* घ च न फ पाठेषु पद्यमिदं नास्ति ।

द्विपदेषु मनुजराशिषु भृगुगुरुदृष्टिः करोति मनुजभवम् ।
गुरुशुक्रभौमभागा दृष्टास्तैरेव मनुजकराः ॥४॥

बलवन्तमंशमथवा द्विपदद्रेक्काणमीक्षते सौम्यः ।
द्विपदे मित्रर्क्षे वा स्थित्वा कुर्याद् ग्रहो मनुजम् ॥५॥

द्विशरीरराशिलग्नं द्विपदद्विशरीरगा ग्रहा बलिनः ।
यदि वीक्षेरन् कुर्युर्जातिं द्विपदाश्रयां सततम् ॥६॥

जामित्रै[1]कादशगाः तृतीयसंस्था ग्रहास्तु पुरुषकराः ।
केन्द्रे नरराशिगते लग्ने तु नपुंसकेऽप्येवम् ॥७॥

---

मनुष्यराशिषु द्विपदद्रेक्काणेषूदितेषु भृगुजीवदृष्टिरस्ति चेन्मनुष्यचिन्ता वक्तव्या।[1] अथवा मनुजराशिषु गुरुशुक्रबुधद्रेक्काणेषूदितेषु तेषामेकदृष्टिरपि मनुष्यजातिं करोति। उक्तयोगाभावाद्वा अबलत्वाद्वा पश्चादुक्तयोगमपि विमृश्य वदेत् ॥४॥

सर्वेषु राशिषु द्विपदराश्यंशकं वा द्विपदद्रेक्काणं वा शुभग्रहः पश्यति चेद् द्विपाच्चिन्तितम्। मित्रर्क्षे द्विपाद्राशौ स्थित्वा ग्रहो वीक्षते चेल्लग्नं मनुजं कुर्यात् ॥५॥

उक्तयोगाभावे द्विदेहराश्युदये द्विदेहद्विपदराशिस्थितैर्ग्रहैर्बलयुतैर्वीक्षिते द्विपदाश्रयचिन्तां कुर्युः, सर्वत्र पूर्वोक्तयोगाभाव इत्यर्थः ॥६॥

पुरुषस्त्रीनपुंसकविधिः कथ्यते—सप्तमतृतीयैकादशगताः पुरुषग्रहाः आदित्यगुरुकुजाः[2][3] पुरुषजातिं कुर्वन्ति। पुरुषराश्युदय इत्यर्थः। अथवा पुरुषराश्युदये पुरुषग्रहाः केन्द्रगताः पुरुषचिन्तां कुर्युः। एवं स्त्रीराश्युदये स्त्रीग्रहौ जामित्रतृतीयैकादशगौ चन्द्रशुक्रौ चेत् स्त्रीचिन्ता वक्तव्या। यद्युभयराश्युदये उक्तेषु राशिषु नपुंसकभावौ बुधमन्दौ स्थितौ चेन्नपुंसकं भवति। स्त्रीनपुंसकं पुन्नपुंसकं वा राशिवशाज्ज्ञेयम्। उक्तयोगाभावे वा योगस्य बलहो [ने ? नत्वे] वा पश्चादुच्यमानेन वा वदेत्। एतल्लक्षणं सर्वत्र ग्राह्यम् ॥७॥

---

१ 'द्वितीय' ब. च, न, फ.

---

1 'ष्टिरस्तिचेन्मनु' झ. 2 'हाः त्रिकोणकेन्द्र' क. 3 'न्द्रत्रिकोणगताः' ख, ज.

पुरुषद्रेक्काणो यस्तस्मिन् पुरुषांशको विलग्नं स्यात् ।
नरराशिगतैर्दृष्टः करोति पुरुषाश्रयां चिन्ताम् ॥८॥

प्रायेण शुभा बलिनो मनुष्यचिन्तां तदाश्रिताः[१] कुर्युः ।
देवानामुच्चगता नीचाश्रयिणस्तु नारकिणाम्* ॥९॥

नारीद्रेक्काणे वा सुधांशुशुक्राश्रयेऽथवा[२] स्त्री स्यात् ।
स्त्र्यंशं द्रेक्काणं वा पश्येत्स्त्रीराशिगोऽपि स्त्री ॥११॥

---

पुरुषद्रेक्काणोदये पुरुषांशकविलग्नं स्यात् नरराशिगतैर्ग्रहैर्बलयुतैर्दृष्टश्चेत् स्वंऽशः पुरुषचिन्तां करोति ॥८॥

प्रायेण शुभा मनुष्यद्रेक्काणांशराशिगता मनुष्यचिन्तां कुर्युः । स्त्रीपुरुषविकल्पं[1] विमृश्य वदेत् । उच्चराशिगताः सर्वे ग्रहा देवचिन्तां कुर्वन्ति । नीचगता नरकस्थितानाम् असन्नराणां चिन्तां कुर्वन्ति ॥९॥

उदयगतं नारीद्रेक्काणं वा चन्द्रशुक्राश्रितं वा चन्द्रशुक्रदृष्टं वा समराशिगतग्रहदृष्टिः स्त्रीचिन्तां करोति । स्त्र्यंशं वा स्त्रीद्रेक्काणं वा स्त्रीराशिगतो ग्रहः पश्यति चेत् स्त्रीचिन्ता ॥१०॥

---

१ 'दाश्रयां कु' ख. २ 'शशाङ्कशु' ख to झ, ट to ढ, द, न to ब, र.

---

1 'स्त्रीराश्युदये स्त्रीग्रहो जामित्रतृतीयैकादशपुरुषविकल्पं विमृ' ग, घ.

---

* घ ब फ पाठेषु पद्यानां क्रम एवम्—नवमपद्यानन्तरं 'स्त्रीक्षेत्रे' (११) इत्यस्य पूर्वार्धम् । ततः नारीद्रे (१०) इति पद्यम् । ततः 'पुरुषस्वभावयुक्तौ नारीचिन्तां करोति निर्दिष्टौ । तावेव पुरुषराशौ कुरुतः पुरुषाश्रयां चिन्ताम् ।' इति पद्यम्, ततः 'नारीग्र०' (१२) इति पद्यम् ।

स्त्रीक्षेत्रे रविचन्द्रौ नारीचिन्ताकरौ विनिर्दिष्टौ ।
तावेव पुरुषराशौ कुरुतः पुरुषाश्रयां चिन्ताम् ॥११॥

*यद्योजेषु स्त्री स्यात्पुरुषाकारस्वभावयुक्ता[1] स्यात्[2] ।
पुरुषोऽपि भवेद्युग्मे नारीसदृशाङ्गशीलः स्यात् ॥१२॥

नारीग्रहो बलाढ्यो नारीद्रेक्काणमाश्रितो भवनम्[3] ।
नार्यंशकं विलग्नं पश्येन्नारीं विजानीयात् ॥१३॥

स्त्रीवर्गे लग्नगते केन्द्रे सौम्याश्रिते विना क्रूरैः ।
कन्यांशद्रेक्काणे वा स्यात्कन्याश्रिता चिन्ता ॥१४॥

---

स्त्रीराशिगतौ रविचन्द्रौ केन्द्रत्रिकोणगतौ बलिनौ चेन्नारीचिन्तां कुरुतः । तौ पुरुषराशिगतौ पुरुषचिन्तां कुर्याताम् ॥११॥

स्त्रीग्रहे पुरुषराशिगते युग्मराशौ वा स्त्री चिन्तिता जाता वा चेत् तस्याः पुरुषाकारञ्च पुरुषवृत्तिञ्च वदेत् । युग्मराश्युदये वा पुरुषग्रहे स्त्र राशिगते पुरुषश्चिन्तितो जातो वा भवेत् तस्य नारीसदृशमङ्गञ्च शीलञ्च प्रवृत्तिञ्च सर्वं वदेत् ॥१२॥

स्त्रीग्रहोऽतिबलयुतो लग्नगतं स्त्रीद्रेक्काणं वा स्त्रीनवांशं वा स्त्रीराशिमाश्रितो वा दृष्टो वा भवेत् तत्रापि स्त्रीचिन्ता वक्तव्या । पुरुषस्त्रीनपुंसकचिन्तालक्षणं गर्भप्रश्ने विमृश्य वदेत् ॥१३॥

स्त्रीत्वे निश्चिते सा परिणीता न वेति संशये अत्र परिज्ञानायाह—स्त्रीद्रेक्काणांशत्रिंशांशराशौ लग्नगते बुधे केन्द्राश्रिते वा कन्यांशद्रेक्काणराशिलग्ने वा केन्द्रे क्रूरवर्जिते कन्यैव चिन्तिता भवति ॥१४॥

---

१ 'वसंयुक्ता ।' ब, र. २ 'क्ता वा ।' ब. ३ 'वति' ख, छ, ज, झ, ट, ब, र.

* पद्यमिदं घ च फ पाठेषु नास्ति ।